# ॥ शिवधर्मः ॥



सर्वाकारमशेषस्य जगतस्सर्वदा शिवम् ।
गोब्राह्मणनृपाणां च शिवं भवतु सर्वदा ॥ १
शिवमादौ शिवं मध्ये शिवमन्ते च सर्वदा ।
सर्वेषां शिवभक्तानां अनुगानां च नः शिवम् ॥ २
मेरुपृष्ठसमासीनं त्र्यम्बकं ससमावृतम् ।
लोकानुग्राहकं शान्तं सर्वज्ञं नन्दिकेश्वरम् ॥ ३.
तेषां मध्ये समुत्थाय मुनिर्ब्रह्मसुतोत्तमः ।
सनत्कुमारः सुतपाः पृच्छति स्म यथाविधि ॥ ४.
सनत्कुमारः ॥.
भगवन्सर्वधर्मज्ञ ! शिवधर्मपरायण ! ।
श्रोतुकामाः परं धर्मं इमे सर्वे समागताः ॥ ५.
अग्निष्टोमादयो यज्ञा बहुवित्तक्रियान्विताः ।
न शक्यं तैर्यतः कर्तुं अल्पवित्तैर्द्विजादिभिः ॥ ६.
नात्यन्तफलक ष्टा बह्वायाससमन्विता ।
तस्योपायमतो ब्रूहि सर्वकामार्थसाधकम् ॥ ७
हिताय सर्वमर्त्यानां शिवधर्मं सनातनम् ।
येन सिद्धाः सुरा दैत्या गन्धर्वोरगराक्षसाः ॥ ८.
ऋषयः किंनरा यक्षास्तथा किंपुरुषादयः ।.
विविधाश्चान्ये शिवधर्मपरायणाः ॥ ९.

संपूज्याः ससुराः सर्वे तद्भक्ताः शिवधार्मिकाः ।

नन्दिकेश्वरः ॥

श्रूयतामभिधास्यामि सुखो महत् पायं तत्क्रमम् ॥ 10.

परमं सर्वधर्माणां शिवधर्मं शिवोक्तम् ।

शिवेन कथितं पूर्वं पार्वत्याः षण्मुखस्य च ॥ 11.

गणानां देवमुख्यानां अस्माकं च विशेषतः ।

अज्ञानार्णवमग्नानां सर्वेषां प्राणिनामयम् ॥ 12.

शिवधर्मोद्भवः श्रीमान् उत्तारार्थमुदाहृतम् ।

. . . . . . . . शिवभक्तैः शिवादिभिः ॥ 13.

संसेव्यते परो धर्मः ते रुद्रा नात्र संशयः ।

ग्रामे वा यदि वारण्ये जले वा स्थण्डिलेऽपि वा ॥ 14.

यत्र वा दृश्यते लिंगं सर्वतीर्थानि तत्र वै ।

ये स्मरन्ति विरूपाक्षं विज्ञेयास्ते गणेश्वराः ॥ 15

कीर्तयिष्यन्ति ये रुद्रं सकृद्व्याजु तेन वा ।

सर्वपापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि ॥ 16.

अर्चयन्ति सदा रुद्रं न ते प्रकृतिमानुषाः ।

रुद्रलोकात्परिभ्रष्टा– स्ते रुद्रा नात्र संशयः ॥ 17

जातेनाप्यरुद्रहा येन नार्चितो भगवाञ्छिवः ।

स चिरं संचरत्यस्मिन् संसारे दुःखसागरे ॥ 18.

तस्य चित्तं महच्छिद्रं स मोहस्सान्ध्यमूकता ।

यः क्षणं वा मुहूर्तं वा शिवमेकं न चिन्तयेत् ॥ 19.

I दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति सदाशिवम् ।
तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः ॥ २०.
भवभक्तिपरा ये तु भवप्रणतचेतसः ।
भवसंस्मरणोद्युक्ताः ते न दुःखस्य भाजनम् ॥ २१.
भवनानि मनोज्ञानि विभ्रमाभरणाः स्त्रियः ।
धनं चातृष्टपर्यन्तं शिवपूजाविधेः फलम् ॥ २२.
येवांछन्ति महाभोगान् राज्यं च त्रिदशालये ।
तेऽर्चयन्ति सदाकालं हरस्य चरणाम्बुजम् ॥ २३.
सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रभावता ।
शौर्यं च जगति ख्यातिः शिवमर्चयतो भवेत् ॥ २४.
नारुद्रः संस्मरेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ।
नारुद्रः कीर्तयेद्रुद्रं नारुद्रो रुद्रमाप्नुयात् ॥ २५.
शिवधर्मस्य सारोऽयं शिवे भक्तिः सुनिश्चला ।
सा चाष्टांगी शिवेनोक्ता कार्या नित्यं प्रयत्नतः ॥ २६.
श्रीभगवान् ॥.
मद्भक्तजनवात्सल्यं पूजायामनुमोदनम् ।
स्वयमभ्यर्चनं भक्त्या ममार्थे चांगचेष्टितम् ॥ २७.
मत्कथाश्रवणे भक्तिः स्वरनेत्रांगविक्रिया ।
ममानुस्मरणं नित्यं यश्च मां चोपजीवति ॥ २८.

(P.12)

भक्तिरष्टविधा ह्येषा यस्मिन्म्लेच्छेऽपि वर्तते ।
स विप्रेन्द्रो मुनिः श्रीमान्स यतिः स च पण्डितः ॥ २९
न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि यः ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथाह्यहम् ॥ ३०.
(पत्रं पुष्पं) फलं तोयं यो मे भक्त्या प्रयच्छति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३१.
नार्चयेद्यः सदात्मस्थं यो मां समयमास्थितः ।
स मां पर्वतदुर्गेषु मार्गमाणो विपद्यते ॥ ३२.
यो मां सर्वत्रगं पश्येत् सर्वं च मयि संस्थितम् ।
तस्याहं नित्यमात्मस्थः स च नित्यं मयि स्थितः ॥ ३३.
श्रीनन्दिकेश्वरः ॥

सुदुर्लभा शिवे भक्तिः दुर्लभं च शिवार्चनम् ।
सुदुर्लभं शिवे दानं शिवहोमं च दुर्लभम् ॥ ३४.
सुदुर्लभं शिवज्ञानं तदभ्यासोऽपि दुर्लभः ।
सुदुर्लभमिदं ज्ञात्वा शिवे भक्तिं समाश्रयेत् ॥ ३५
लाभस्तेषां मनुष्याणां ये शिवं शरणागताः ।
तेषां दिवा च रात्रौ च नित्यं शिवगता स्मृतिः ॥ ३६.
नमस्कारादिसंयुक्तं शिवायेत्य- क्षरद्वयम् ।
जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥ ३७.

(PL2) (PL2) इत्येष वः समासेन शिवधर्मोऽखिलः क्रमात् ।
निर्दिष्टः प्रथमाध्याये शेषो ह्यस्यैव विस्तरः ॥ ३८.
य इदं पठते नित्यं शृणुयाद्वा समाहितः ।
विमुक्तः सर्वपापेभ्यः शिवलोके महीयते ॥ ३९.
डाकिन्यो विविधाकारा राक्षसाः प्रेतनायकाः ।
न तस्य पीडां कुर्वन्ति न तथान्येऽपि हिंसकाः ॥ ४०.
शत्रवो नाशमायान्ति संग्रामे जयमाप्नुयात् ।
स न रोगेण बाध्येत न स्पृशन्त्यापदोऽपि तम् ॥ ४१.
धनमायुर्यशो विद्या- प्रभावैश्चातुलो भवेत् ।
शुभेनोपचयं याति नित्यं पूर्णमनोरथः ॥ ४२.

इति शिवधर्मशास्त्रे
प्रथमोऽध्यायः ॥

---

~~नन्दिकेश्वरः~~ ॥

२ लिंगार्चनविधिं पुण्यं श्रोतुमिच्छामि तत्वतः ।
त्वत्प्रासादादशेषेण भगवन्नन्दिकेश्वर! ॥ १.
यत्पुण्यं स्थापिते लिंगे कृते च शिवालये ।
संमार्जने च यत्पुण्यं यत्पुण्यमुपलेपने ॥ २.

(P.L.2)

2 नीराजनौषधि बीजा- स्नानमंगळवादने ।
(P.L.2) पुण्यं यच्चार्घ्यदानेन तोयस्नाने च यत्फलम् ॥ 3.
पंचगव्यपयःस्नाने दधिस्नाने च यद्भवेत् ।
घृताभ्यंगे च यत्प्रोक्तं घृतस्नाने च यद्भवेत् ॥ 4.
मधुस्नानेन यत्प्रोक्तं पुण्यमिक्षुरसेन च ।
उद्वर्तनान्तरास्नानं कुशपुष्पोदकेन च ॥ 5.
सुवर्णरत्नतोयैस्तु गन्धचन्दनवारिभिः ।
कर्पूरागरुतोयैश्च स्वच्छतोयेन यत्फलम् ॥ 6.
विलेपनैश्च गन्धाद्यैः विलिप्तेन च यत्फलम् ।
तालवृन्तप्रदानेन प्रदाने चामरस्य च ॥ 7
मुक्तापुष्पार्चने यच्च मालाभिर्लिंगपूरणे ।
पुष्पमण्डपिकायां च पुष्पमालावलम्बने ॥ 8.
पूजनोक्तविशेषैश्च वेदामालावलम्बने ।
पुष्पजातिविशेषेषु धूपदीपे च यत्फलम् ॥ 9.
वस्त्रालंकारदानेन दीपदर्पणदर्शने ।
भक्ष्यभोज्यान्नपानादि फलकन्दनिवेदने ॥ 10.
प्रदक्षिणनमस्कार- प्रणामस्तोत्रजं फलम् ।
छत्रध्वजपताकानां घण्टावादित्रशंखयोः ॥ 11.
वितानवस्त्रपूजायां बलिहोमक्रियासु च ।
गानगन्धनृत्यनागानां भूमिदाने च यत्फलम् ॥ 12.

2. ग्रामखेटपुराणां च देशदाने च यत्फलम् ।
स्त्रीणां संगीतदानेन नाट्येनैव विशेषतः ॥ 13.
स्वयं माल्योपहारेण पुंसां पुण्यं तु यद्भवेत् ।
तत्पालनापहारे च पुण्यापुण्यं च यद्भवेत् ॥ 14.
(P.L.3.) (PL.3)| - - - - नादि मात्रोपकरणानि च ।
दत्वा किं लभते पुण्यं कृत्वा वा तत्प्रतिश्रयम् ॥ 15.
नमस्कारे तथा तेषां प्रत्युत्थानाभिवादने ।
खट्वा ~~स्नात्वा~~ प्रावरणादीनि दत्वा यत्फलभाग्भवेत् ॥ 16
यदप्यन्यद्भवेत्सूक्ष्मं अज्ञानाच्च प्रचोदितम् ।
तत्सर्वं कथयाऽस्माकं भक्तानामनुकम्पया ॥ 17
इति शिवधर्मशास्त्रे
द्वितीयोऽध्यायः ॥

---

3. श्रीनन्दिकेश्वरः ॥
त्वमतीव शिवे भक्तः पद्मयोनिसुतोत्तम! 1.
तेन ते निखिलं वक्ष्ये शृणुष्वैकाग्रमानसः ॥ 1.

(P.L. 3.)

3. पूर्वमेकार्णवे घोरे नष्टे स्थावरजंगमे ।
विवादस्तु महानासीत् ब्रह्मविष्ण्वोः परस्परम् ॥ 2.
अहं कर्ता ह्ययं कर्ता न मत्तोऽन्यो जगत्प्रभुः ।
एवमाह हरिं ब्रह्मा ब्रह्माणं च हरिस्तथा ॥ 3.
तयोर्दर्पापहारार्थं प्रबोधार्थं च देवयोः ।
मध्ये समभवल्लिंगं ऐश्वरं तैजसं परम् ॥ 4.
ज्वालामालावृतं दिव्य मप्रमेयमनूपमम् ।
योजनायुतविस्तीर्णं स्थितं तद्विमलेऽम्भसि ॥ 5.
ज्वालाभिर्मोहितो तस्य लिंगस्य सुरसत्तमौ ।
ततो विस्मयमापन्नौ पश्यन्तावमराधिपौ ॥ 6.
ज्ञातादूर्ध्वमधस्तस्य संप्रधार्य परस्परम् ।
अधो द्रष्टुं गतो विष्णु- रूर्ध्वं चैव पितामहः ॥ 7
अदृष्ट्वान्तमधश्चोर्ध्वं तौ समेत्य परस्परम् ।
कृताञ्जलिपुटौ भूत्वा लिंगं तुष्टुवतुः ~~सुस~~स्तदा । 8.
अनादि देवदेवेश! विश्वेश्वर! महेश्वर! ।
सर्वज्ञ! ज्ञानविज्ञान- प्रदायक! नमोऽस्तु ते ॥ 9.
अनन्तकान्ति - - अनन्तासनसंस्थित! ।
अनन्तशक्तिसंभोग! परमेश नमोऽस्तु ते ॥ 10
परावरपरातीत! उत्पत्तिस्थितिकारण! ।
सर्वार्थसाधनोपाय! विश्वेश्वर! नमोऽस्तु ते ॥ 11.

(P.L.8)

3. बहुरूप! महारूप! सर्वरूप! नमोऽस्तु ते ।
पशुपाशार्णवातीत! वरप्रद नमोऽस्तु ते ॥ 12
स्वभावनिर्मलाभोग! सर्वव्यापिन्सदाशिव ।
योगयोगिन् महायोगिन् योगेश्वर! नमोऽस्तु ते ॥ 13.
निरंजन! निराधार! स्वाधार! निरुपप्लव! ।
प्रसन्न परमेशान! योगेश्वर! नमोऽस्तु ते ॥ 14.
जिह्वाचपलभावेन वेदितव्योऽसि यन्मया ।
तत्क्षन्तव्य मनौपम्य! कस्ते स्तौति गुणार्णवम् ॥ 15.
लिंगो ~~त्वो~~त्पत्तिस्तवं पुण्यं यः शृणोति नरस्सदा ।
नोत्पद्यते स संसारे स्थानं प्राप्नोति शाश्वतम् ॥ 16.
तस्मात्सर्वप्रयत्नेन शृणुयाद्वाचयेत्तथा ।
पापकंचुकमुत्सृज्य प्राप्नोति परमं पदम् ॥ 17
लिंगमध्ये परं लिंगं स्थितं प्रादेशसंमितम् ।
समाधिस्तोत्रसंपन्नौ दृष्टवन्तौ शिवात्मकौ ॥ 18.
नैव तत्कांचनं रौप्यं ताम्रं स्फाटिकमौक्तिकम् ।
कक्षमात्रस्थितं शान्तं केवलं तच्छिवात्मकम् ॥ 19.
तयोस्तुष्टौ महादेवो प्रददौ वरमुत्तमम् ।
कारणत्वमनुक्त्वा च तत्रैवान्तरधीयत ॥ 20.
ततः प्रभृति ब्रह्माद्याः प्रतिष्ठाप्य सुरासुराः ।
तल्लिंगानुकृतिं लिंगं ईडिरे मुनयस्तदा ॥ 21.

(P.L.3)

3. परं ग्रन्थशरीरं च लिंगं क्षेत्रमनादिमत् ।
यदा मयैश्वरं तेजः तल्लिंगं पंचसंज्ञितम् ॥ 22.
कल्पान्ते यस्य लिंगस्य लीयन्ते सर्वदेवताः ।
दक्षिणे लीयते ब्रह्मा वामतश्च जनार्दनः ॥ 23.
हृदये चैव गायत्री सर्वदेवोत्तमोत्तमः ।
लीयन्ते मूर्ध्नि वै वेदाः सर्षिसंगपदक्रमाः ॥ 24.
जठरे लीयते सद्यः जगत्स्थावरजंगमम् ।
पुनरुत्पद्यते तस्माद् ब्रह्माण्डं सचराचरम् ॥ 25.
आ ~~प्र~~काशं लिंगमित्याहुः पृथिवी तस्य पीठिका ।
आलयः सर्वभूतानां लयनाल्लिंगमुच्यते ॥ 26.
तस्माल्लिंगं प्रतिष्ठाप्य सर्वदेवभवोद्भवम् ।

(P.L.4)

स्थापितं तेन सर्वं स्यात् पूजितं च न संशयः ॥ 27.
कृतांजलिपुटो विष्णुः ब्रह्मा च ब्रह्मतत्परः ।
पूर्वं लिंगं समभ्यर्च्य पश्चात्कार्याणि चक्रतुः ॥ 28.
ब्रह्मा ब्रह्माक्षरैर्दिव्यैः लिंगं पूजयते सदा ।
गन्धपुष्पादिभिर्नित्यं विष्णुः पूजयते शिवम् ॥ 29.
ब्रह्मा पूजयते नित्यं लिंगं शैलमयं शुभम् ।
तस्य संपूजनात्तेन प्राप्तं ब्रह्मत्वमुत्तमम् ॥ 30.
इन्द्रनीलमयं लिंगं विष्णुः पूजयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन सोऽद्भुतैकं सनातनः ॥ 31.

(P.L.4)

3\. शक्रोऽपि देवराजेन्द्रो लिंगं मणिमयं शुभम् ।
कृत्वा पूजयते नित्यं तेन शक्रत्वमाप्तवान् ॥ 32.
लिंगं हेममयं कान्तं धनदोऽर्चयते सदा ।
तेनासौ धनदो देवो धनदत्वमवाप्तवान् ॥ 33.
विश्वे देवा महात्मानो रौप्यं लिंगं मनोहरम् ।
यजन्ते विधिवत्तेन विश्वे देवत्वमाप्नुयुः ॥ 34.
वायुः पूजयते भक्त्या लिंगं पित्तलजं शुभम् ।
वायुत्वं तेन संप्राप्तं अनौपम्यगुणावहम् ॥ 35.
(क्षणिकं) वसवः ~~प्राटिक~~ लिंगं पूजयन्ति विधानतः ।
प्राप्तास्तेन महात्मानो वसुत्वं सुमहोदयम् ॥ 36.
अश्विनौ पार्थिवं लिंगं पूजयन्तौ विधानतः ।
तेन तावश्विनौ देवौ दिव्यदेहगता शुभौ ॥ 37.
स्फाटिकं निर्मलं लिंगं वरुणोऽर्चयते सदा ।
वरुणत्वं हि संप्राप्तं तेन भक्त्या समन्वितम् ॥ 38.
लिंगमश्ममयं पुण्यं अग्निर्यजति भावितः ।
अग्नित्वं प्राप्तवांस्तेन तेजोरूपसमन्वितम् ॥ 39.
ताम्रलिंगं सदाकालं भक्त्या देवो दिवाकरः ।
त्रिकालं यजते तेन, ~~स~~प्राप्तं सूर्यत्वमुत्तमम् ॥ 40.
मुक्ताफलमयं लिंगं सोमः पूजयते सदा ।
तेन सोमोऽपि संप्राप्तः सोमत्वं सततोज्वलम् ॥ 41.

(P.L4) 3 प्रवालकमयं लिंगं यजन्ते पन्नगोत्तमाः ।
तेन नागाः सुभोगाढ्याः प्राप्तास्ते परमं पदम् ॥ 42.
कृष्णायासमयं लिंगं पूजयन्ति सुरोत्तमाः ।
राक्षसाश्च महात्मानः तेन तेऽमितविक्रमाः ॥ 43.
त्रपुसीसमयं लिंगं पिशाचाः पूजयन्ति तम् ।
तेन ऋद्धिबलोपेताः प्राप्नुवन्ति परं पदम् ॥ 44.
त्रैलोहिकं सदा लिंगं यजन्ते गुह्यकादयः ।
तेन भोगबलोपेताः प्रयान्ति परमन्दिरम् ॥ 45.
बहुलोहमयं लिंगं यजन्ते मातरः सदा ।
मातृत्वं प्राप्य तास्सर्वाः प्रयान्ति परमं पदम् ॥ 46.
एवं देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ।
पूजयन्ति सदाकालं ईशानं सुरनायकम् ॥ 47.
सर्वो लिंगमयो लोकः सर्वं लिंगे प्रतिष्ठितम् ।
तस्मात्सदार्चयेल्लिंगं यदीच्छेत्सिद्धिमात्मनः ॥ 48.
लिंगे देवो महादेवः साक्षादेवाऽवस्थितः ।
अनुग्रहाय लोकानां तस्माल्लिंगं प्रपूजयेत् ॥ 49.
यो न पूजयते मोहात् लिंगं त्रिभुवनेश्वरम् ।
नासौ स्वर्गस्य मोक्षस्य न च राज्यस्य भाजनम् ॥ 50.
यः पूजयति भक्त्या लिंगं त्रिभुवनेश्वरम् ।
स्वर्गमोक्षे च राज्यानां क्षिप्रं भवति भाजनम् ॥ 51.

(Pl.4)

3. तस्मादेकमना भूत्वा यावज्जीवं प्रतिज्ञया ।
अर्चयित महादेवं आपन्नोऽपि सदा बुधः ॥ 52.
वरं प्राणपरित्याग शिरसोवापि भेदनम् ।
नत्वा चाभ्यर्च्य भुंजीया-द्भगवन्तं त्रिलोचनम् ॥ 53.
एवं निर्वहते यस्तु यावज्जीवं प्रतिज्ञया ।
मनुष्यचर्मणा बद्धः स रुद्रो नात्र संशयः ॥ 54.
नास्ति लिंगार्चनादन्य-त्पुण्यमभ्यधिकं कलौ ।
एवं विज्ञाय यत्नेन पूजनीयः सदाशिवः ॥ 55.
यो लिंगं द्वेष्टि संमोहा-त्सर्वलोकनमस्कृतम् ।
नरो नरकगामी स्यात् तस्य संभाषणादपि ॥ 56.
माहेश्वरपरं सर्वं त्रैलोक्यं सचराचरम्

(Pl.5)

ते कृतघ्ना भवन्तीह ये न भक्ता महेश्वरे ॥ 57
यस्मात्सर्वेषु भूतेषु गतिर्देवो महेश्वरः ।
तस्मात्सर्वप्रयत्नेन शिवमेव समाश्रयेत् ॥ 58.
सागराणां क्षयं यान्ति क्षीयते हिमवानपि ।
रुद्रलोके क्षयो नास्ति शंकरे शरणं गते ॥ 59.
एष्टव्या बहवः पुत्राः शिवधर्मानुसारिणः ।
समुद्धरन्ति ते गोत्रं रज्जुः कूपाद्घटं यथा ॥ 60.
समुद्धृत्य तथा यान्ते कुलानामेकविंशतिम् ।
शिवत्वं यान्ति ते क्षिप्रं धर्माधर्मविवर्जिताः ॥ 61.

(P.15)

3. लिंगद्वयं समाख्यातं चरं चाचरमेव च ।
चरं व्यक्तीति विख्यातं अचरं पार्थिवादिकम् ॥ 62.
चरे सदा वसत्येव प्रतिच्छन्नो महेश्वरः ।
अचरे मंत्रसंस्काराद् वसत्येव सदाशिवः ॥ 63.
स्थावरं जंगमं चैव द्विविधं लिंगमिष्यते ।
स्थावरं स्थापितं लिंगं जंगमं दीक्षितं विदुः ॥ 64.
जंगमस्यावमानेन स्थावरं निष्फलं भवेत् ।
तस्माल्लिंगद्वयं प्राज्ञो नावमन्येत सर्वदा ॥ 65.
लिंगमित्थं प्रतिष्ठाप्य सर्वयत्नैर्विधानतः ।
स यत्फलमवाप्नोति तदेकाग्रमनाः शृणु ॥ 66.
सर्वयज्ञतपोदान- तीर्थवेदेषु यत्फलम् ।
तत्फलं कोटिगुणितं स्थाप्य लिंगं लभेन्नरः ॥ 67.
यो लिंगं स्थापयेदेकं विधिपूर्वं सलक्षणम् ।
सर्वागमोदितं पुण्यं कोटिकोटिगुणं लभेत् ॥ 68.
मातृतः पितृतश्चैव यतश्चोद्वहते स्त्रियम् ।
कुलैकविंशमुत्तार्य रुद्रलोके महीयते ॥ 69.
भुक्त्वा सकलान् भोगान् प्रलये समुपस्थिते ।
ज्ञानयोगं समासाद्य स तत्रैव विमुच्यते ॥ 70.
अथ वैराग्यमाकांक्षेत जायते स भवान्तरे ।
सप्तद्वीपसमुद्राया: क्षितेरधिपतिर्भवेत् ॥ 71.

(P.25)

3 यः कृत्वा पार्थिवं लिंगं अर्चयित्वा सवेदिकम् ।
इहैव धर्मवांञ्छ्रीमान् सोऽन्ते रुद्रश्च जायते ॥ 72.
त्रिसंध्यं योर्चयेद्विल्वं कृत्वा लिंगं तु पार्थिवम् ।
शतैकादशिका यावत् तस्य पुण्यफलं शृणु ॥ 73.
अनेनैव स देहेन रुद्रः संचरते क्षितौ ।
पापहा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ॥ 74
उद्धृत्य दिवि संस्थाप्य कुलानामेकविंशतिम् ।
सहायैः सहितो नित्यं मोदते दिवि रुद्रवत् ॥ 75.
शालिपिष्टमयं लिंगं सर्वगन्धोपशोभितम् ।
कुसुमैस्सर्वगन्धैश्च फलैश्च विविधैस्तथा ॥ 76.
भक्ष्यभोज्यैरनेकैश्च घृतदीपैश्च संयुतम् ।
तस्य दक्षिणपार्श्वे तु विन्यसेदगरुं बुधः ॥ 77.
दद्यात्पश्चिमभागे तु शोभनान्तु मनःशिलाम् ।
उत्तरे चन्दनं दद्यात् हरितालं तु पूर्वतः ॥ 78.
एवं वित्तानुसारेण यः कृत्वा विधिपूर्वकम् ।
कृष्णपक्षे चतुर्दश्यां शिवाय विनिवेदयेत् ॥ 79
यत्किंचित्सकृदप्येवं लिंगं कुर्याद्विचक्षणः ।
यत्फलं लभते सोऽपि तन्मे निगदतः शृणु ॥ 80.
सर्वपापविनिर्मुक्तः सर्वोपद्रववर्जितः ।
निष्कलः सर्वगो भूत्वा प्रविशेच्छिवमव्ययम् ॥ 81.

(P.L 5) 3 अप्यामलकमात्रं वा लिंगं कृत्वाऽभिपूज्य च ।
यन्मयं तन्मयं कृत्वा शिवलोके महीयते ॥ 82.
पुण्यक्षयात्क्षितिं प्राप्य राजा भवति धार्मिकः ।
वेदवेदांगतत्वज्ञो ब्राह्मणो वापि जायते ॥ 83.
मृद्गुस्मगोमयात्पिण्डैः तथा वालुकयापि वा ।
कृत्वा लिंगं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥ 84.
कृशापूतरुकं०ये वा अप्यंगुल्यादिभिर्लिखेत् ।
क्रीडायां बालयुतं कल्पं भवेत्सोऽपि गणेश्वरः ॥ 85.
(P.L 6) आत्मनो विभजेत्तेन तद्यत्र च निर्मितम् ।
सपुत्रबान्धवैस्सार्धं पुनात्यासप्तमं कुलम् ॥ 86.
पांसुना क्रियमाणोऽपि लिंगं कुर्यात्तु यो नरः ।
प्रेत्यान्ते लभते राज्यं सुसंपन्नमखण्डकम् ॥ 87.
हीनवंशे च ये जाताः पापिष्ठा ये च मानवाः ।
भवभावप्रपन्नास्ते मुच्यन्ते नात्र संशयः ॥ 88.
अलिंगी लिंगिरूपेण यो लिंगमुपजीवति ।
स पच्यते महाघोरे नरके कालमक्षयम् ॥ 89.
सूक्ष्मेणापि प्रयोगेन अमेयः पुण्यसंचयः ।
शिवमर्चयतो यस्मात् तस्मान्नित्यं समर्चयेत् ॥ 90.
लिंगमेवं प्रतिष्ठाप्य सर्वयत्नैर्विधानतः ।
आराध्य गन्धपुष्पाद्यैः इदं स्तोत्रमुदीरयेत् ॥ 91.

(PL 6)

3. अनादिदेवदेवेश! विश्वेश्वर! ~~न~~ महेश्वर! ।
सर्वज्ञज्ञानविज्ञान- प्रदानैक! नमोऽस्तु ते ॥ 92.
अनन्तकान्तिसंपन्न! अनन्तासनसंस्थित! ।
अनन्तशक्तिसंभोग- परमेश! नमोऽस्तु ते ॥ 93.
परावर! परातीत! उत्पत्तिस्थितिकारण! ।
सर्वार्थसाधनोपाय- विश्वेश्वर! नमोऽस्तु ते ॥ 94.
बहुरूप! महारूप! सर्वरूपोत्तमोत्तम! ।
पशुपाशार्णवातीत! वरप्रद! नमोऽस्तु ते ॥ 95.
स्वभावनिर्मलाभोग- सर्वव्यापिन्सदाशिव! ।
योगियोगिमहायोगे योगेश्वर! नमोऽस्तु ते ॥ 96.
निरंजन! निराधार! स्वाधार! निरुपप्लव! ।
प्रसन्न परमेशान! योगीश्वर! नमोऽस्तु ते ॥ 97.
जिह्वाचापलभावेन वेदितोऽसि हि यन्मया ।
तत्क्षन्तव्यमनौपम्य कस्ते स्तोतुं गुणार्णवम् ॥ 98.
लिंगोत्पत्तिस्तवं पुण्यं यः शृणोति नरः सदा ।
नोत्पद्यते च संसारे स्थानं प्राप्नोति शाश्वतम् 99.
तस्मात्सर्वप्रयत्नेन शृणुयाद्वाचयेत्तथा ।
. . . मुत्सृज्य प्राप्नोति परमं पदम् ॥ 100.

इति शिवधर्मशास्त्रे लिंगोद्भवं
नाम तृतीयोऽध्यायः ॥

(P.L.6)

4. नन्दिकेश्वर: ॥

शिवभक्ता महोत्साहा: शिवार्चनपरायणा: ।
संयता धर्मसंपन्ना: सर्वार्थ- ते ॥ १
सर्वद्वन्द्वसहा धीरा नित्यमुद्युक्तचेतस: ।
परोपकारनिरता गुरुशुश्रूषणे रता: ॥ २.
मार्दवार्जवसंपन्ना: अनुकूला: प्रियंवदा: ।
अमानिनो बुद्धिमन्त: त्यक्तस्पर्धा गतस्पृहा: ॥ ३
शान्ता स्मितमुखा भद्रा नित्यं स्वागतवादिन: ।
अल्पवाच: सुवक्तारो गुरुभक्तिविशारदा: ॥ 4.
शौचाचारसमायुक्ता दयादाक्षिण्यगोचरा: ।
दम्भमात्सर्यनिर्मुक्ता: यथातथ्याभिभाषिण: ॥ 5.
संविभागपरा: प्राज्ञा: अशठाश्चाप्यकुत्सिता: ।
विषयेष्वपि निर्लेपा: पद्मपत्रमिवाम्भसा ॥ 6.
न दीना नापि मलिना न च रोषवशंवदा: ।
भवन्ति भावितात्मान: सुस्निग्धा: साधुसेविता: 7.
न पाणिपादवाक्चक्षु-श्रोत्रशिश्नवशं गता: ।
चापलानि न कुर्वन्ति सर्वथासंगवर्जिता: । 8.
रुद्रात्मानो रुद्रपरा रुद्रांशा रुद्रभाविता: ।
एवंविधसमाचारा भवन्ति भुवि मानवा: ॥ 9.

(Pl.6) 4. एकान्तभक्तिमास्थाय गुणेष्वेतेषु वर्तते ।
पूजनीयः शिवो नित्यं परापरविभूतये ॥ 10.
किंचिद्वेदमयं पात्रं किंचित्पात्रं तपोमयम् ।
आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ॥ 11.
सर्वेषामेव पात्राणां अतिपात्रं महेश्वरः ।
पतनात्त्रायते यस्माद् अतीव नरकार्णवे ॥ 12.
तस्य पात्रस्य माहात्म्याद् दानमण्वपि चाक्षयम् ।
तस्मादस्मै सदा देयं अप्रमेयफलार्थिभिः ॥ 13.
शिवे दत्तं हुतं तप्तं पूजाफलनिवेदनम् ।
एकं वानन्तफलदं तद्भवेन्नात्र संशयः ॥ 14.
(Pl.7) भक्त्या वित्तानुसारेण | कुर्यात्प्रासादसंचयम्
अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ॥ 15.
वित्तशाठ्येन यः कुर्या- द्धर्ममाढ्योऽपि यो नरः ।
न स तत्फलमाप्नोति प्रलोभाक्रान्तमानसः ॥ 16
तस्मात्त्रिभागवित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं च धर्मार्थे अनित्यं जीवितं यतः ॥ 17
भक्त्या प्रचोदितः कुर्या- दल्पवित्तोऽपि मानवः ।
महाविभवसारोऽपि न कुर्याद्भक्तिवर्जितः ॥ 18.
सर्वस्वमपि यो दद्या- च्छिवे भक्तिविवर्जितः ।
न तेन धर्मभाक्स स्या- द्भक्तिरेवात्र कारणम् ॥ 19.

(PL7)

4 न तत्तपोभिरत्युग्रैः न च सर्वमहामखैः ।
गच्छेच्छिवपुरं दिव्यं मुक्त्वा भक्तिं शिवात्मिकाम् २०.
मृद्दारुविष्टकशैलं वा यः कुर्याद्वै शिवालयम् ।
त्रिसप्तकुलमुद्धृत्य शिवलोके महीयते ॥ २१.
मृण्मया कोटिगुणितं पुण्यं स्याद्दारुभिः कृते ।
कोटिकोटिगुणं पुण्यं मृत्काष्ठादिष्टकामये ॥ २२.
इष्टकाद्विगुणं पुण्यं शैलके स्याच्छिवालये ।
मृच्छैलयोः समं ज्ञेयं पुण्यमाढ्यदरिद्रयोः ॥ २३.
यत्र क्वापि गतः पुण्यं कृतं शैलेष्टकादिभिः ~~शैलजे स्याच्छिवालये~~ ।
नवं पुराणरहितं तथा कुर्याच्छिवालयम् ॥ २४.
अष्टेष्टकासमायुक्तं प्रकुर्याच्छिवालयम् ।
विधूय पापसंघातं सोऽपि गच्छेच्छिवालयम् २५.
क्रीडमानोऽपि यः कुर्याद्बालभावे शिवालयम् ।
रुद्रलोके लभेत्सोऽपि विमानं सार्वकामिकम् ॥ २६.
पुष्पमालापरिक्षिप्त- [illegible]ध्वानुसेवितः ।
दोलाविक्षेपसंयुक्तं घण्टाचामरभूषितम् ॥ २७.
मुक्तादामवितानेन शोभितं सूर्यसप्रभम् ।
अप्सरोगणसंयुक्तं सर्वकामसुखप्रदम् ॥ २८.
तत्रोषित्वा महाभोगे कोटिकोट्ययुतं सुखी ।
क्रमादागत्य लोकेऽस्मि- न्राजा भवति धार्मिकः ॥ २९.

(P.27)

4. दूरतः शिखरं दृष्ट्वा नमस्कुर्याच्छिवालयम् ।
सप्तजन्मकृतं पापं क्षिप्रमेव विनश्यति ॥ ३०.
पश्यन्परिहरञ्जन्तून् मार्जन्यात्यतिसूक्ष्मया ।
शनैः संमार्जनं कुर्याच्च चान्द्रायणफलं लभेत् ॥ ३१.
नाहारवशजीर्णाया वन्ध्यायाः क्षीणवत्सया ।
रोगार्ता नवसूता या भोग्यो गोमयमाहरेत् ॥ ३२.
खसंस्थगोमयं ग्राह्यं स्थाने वा पतितं शुभे ।
उपर्यधश्च संत्यज्य प्रत्यग्रं जन्तुवर्जितम् ॥ ३३.
वस्त्रपूतेन तोयेन यः कुर्यादुपलेपनम् ।
पश्यन्परिहरञ्जन्तून् चान्द्रायणफलं लभेत् ॥ ३४.
यः कुर्यात्सर्वकार्याणि वस्त्रपूतेन वारिणा ।
स मुनिः स महासाधुः स योगी स शिवं व्रजेत् ३५
क्षरन्ति सर्वदानानि यज्ञहोमबलिक्रियाः ।
न तु क्षरेन्महादानं अभयं सर्वदेहिनाम् ॥ ३६.
नैरन्तर्येण यः कुर्यात् पक्षसंमार्जनं जनम् ।
युगकोटिशतं दिव्यं शिवलोके महीयते ॥ ३७
तदन्ते स चतुर्वेद- स्वरूपः प्रियदर्शनः ।
आढ्यः सर्वगुणोपेतो राजा भवति धार्मिकः ॥ ३८.
संपर्केणापि यः कुर्यात् नरः कर्म शिवालये ।
सोऽपि देहत्रयाज्ज्ञानं प्राप्य शान्तिमवाप्नुयात् ॥ ३९.

(P.7)

4. रुद्रदेवनिकार्येषु कश्चिज्ज्ञानमवाप्नुयात् ।
कश्चिदेव तु मेदिन्यां कष्टवा ज्ञानं विमुंचते ॥ 40.
तावद्भ्रमन्ति संसारे दुःखशोकपरिप्लुताः ।
न भवन्ति शिवे भक्ता यावत्सर्वेऽपि देहिनः ॥ 41.
समासक्तं यथा चित्तं भवेद्विषयगोचरा ।
यदि नाम शिवेऽप्येवं को न मुच्येत बन्धनात् ॥ 42.
यः कुर्यात्कुट्टिमं भूमिं दर्पणोदरसंनिभम् ।
नानावर्णविचित्रां च विचित्रकुसुमोज्वकम् ॥ 43.
क्वचित्ककशाविन्यस्तां पंकजाद्युपशोभिताम् ।

(P.L.8)

(मनो)रमां च कुसुमां शिवायतनसंसदि ॥ 44.
यावद्व्यस्ता भवेद्भूमिः समन्तादुपशोभिता ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥ 45.
कारयेच्चित्रशास्त्रज्ञैः यत्नाच्चित्रं शिवालये ।
रुद्रावतारक्रीडाद्यैः प्रयोगैः रागमोदितैः ॥ 46.
यावन्ति रुद्ररूपाणि स्वरूपाण्यपि केरवयेत् ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥ 47.
सुधाविलिप्तं यः कुर्यात् सर्वयत्नैः शिवालयम् ।
तावत्पुण्यं भवेत्सोऽपि यावदायतने कृते ॥ 48.
प्रत्यब्दं यः प्रकुर्वीत शंभोरायतनं बुधः ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥ 49.

(PL 8)

*4. धवलं सूतसुधया यथाशोभं च वर्णकैः ।
यावन्त्यब्दानि कुरुते धवलं तच्छिवालयम् ॥ 50.
खण्डस्फुटितसंस्कारं यः कुर्वीत शिवालये ।
आरामावसथे वापि लभते मौक्तिकं फलम् ॥ 51.
नास्ति रुद्रसमो देवो नास्ति रुद्रसमो गुरुः ।
नास्ति रुद्रसमं ध्यानं नास्ति रुद्रसमं तपः ॥ 52.
एवं शिवाश्रमारामं कृत्वा संस्कारपूर्वकम् ।
कृत्वाल्पमपि वा भक्त्या इदं स्तोत्रमुदीरयन् ॥ 53.
निर्धूतमलदेहाय स्वभावामलमूर्तये ।
सितभस्माङ्गरागाय देवेशाय नमोऽस्तु ते ॥ 54.
नीलकण्ठाय शर्वाय अजायामितमूर्तये ।
बहु ~~चण्ड~~रूपाय कान्ताय शाश्वताय नमोऽस्तु ते ॥ 55.
पराय परमेशाय सर्वज्ञाय नमोऽस्तु ते ।
अतीतगुणसंख्याय विश्वेशाय नमोऽस्तु ते ॥ 56.
महाभोगीन्द्रभूषाय पिंगलोचनशोचये ।
विचित्रचरिताढ्याय अनन्ताय नमोऽस्तु ते ॥ 57.
सर्वप्रणतदेहाय स्वयमप्रणतात्मने ।
पूज्यानामपि पूज्याय नमस्त्र्य ~~सहस्रा~~क्षाय शूलिने ॥ 58.
ब्रह्मेन्द्रविष्णुवन्द्याय उत्पत्तिस्थितिहेतवे ।
भुक्तिमुक्तिप्रदानाय संस्तुताय नमोऽस्तु ते ॥ 59.

(PL8)

4. वामाय वामरूपाय वामचाराय धामिने ।
वामकान्तार्धदेहाय ईशानाय नमोऽस्तु ते ॥ 60.
य इमं कीर्तयेत्पुण्यं प्रासादाध्यायमुत्तमम् ।
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ॥ 61.

इति शिवधर्मशास्त्रे प्रासादाध्यायो
नाम चतुर्थोऽध्यायः ॥.

---

=.

5. श्रीनन्दिकेश्वरः ॥.
लिंगमूर्तेर्महेशस्य शिवस्य परमेष्ठिनः ।
स्नानकाले प्रकुर्वीत जयशब्दादिमंगलम् ॥ 1.
त्रिशूलवज्रशंखाब्ज- श्रीवत्सस्वस्तिकादिभिः ।
हेमरूप्यादिपात्रेषु कल्पितैर्गोमयादिभिः ॥ 2.
नानावर्णै(श्च कु)सुमै- रक्षतैस्तिलतण्डुलैः ।
सिद्धार्थदधिसंमिश्रैः यथाशोभं च पूरितैः ॥ 3.
उच्चैर्यष्टिप्रदीपाद्यैः चूताश्वत्थादिपल्लवैः ।
ओषधीभिश्च मेध्याभिः सर्वबीजैर्यवांकुरैः ॥ 4

5. अष्टम्यादिषु सर्वेषु दिवसेषूत्सवेषु च ।

(Pl.8) पर्वकालेषु सर्वेषु पुण्यपौर्णादिपर्वणि ॥ 5.

शंखभेर्यादिनिर्घोषैः महद्भिर्गेयसंयुतैः ।

कुर्यान्नीराजनं लिंगे शिवमुद्दिश्य मंगलैः ॥ 6.

यावत्पर्वाणि विधिवत् कुर्यान्नीराजनं शिवे ।

तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ 7.

स्नानकाले त्रिसंध्यं च यः कुर्याद्गेयवादनम् ।

नृत्तं वा मुखवाद्यं वा तस्य पुण्यफलं शृणु ॥ 8.

यावन्त्यहानि कुरुते गेयनृत्तादिवादनम् ।

तावद्वर्षसहस्राणि शिवलोके महीयते ॥ 9.

कपिलापंचगव्येन कुशवारियुतेन च ।

स्नापयेन्मन्त्रपूतेन ब्रह्मस्नानं हि तत्स्मृतम् ॥ 10.

एकाहमपि यो लिंगे ब्रह्मस्नानं समाचरेत् ।

स विधूयाशु पापानि रुद्रलोके महीयते ॥ 11.

कपिलापंचगव्येन दधिक्षीरघृतेन च ।

स्नानं शतगुणं ज्ञेयं इतरस्मान्न संशयः ॥ 12.

(Pl.9) देवार्थं समुद्दिश्य देहशुद्ध्यर्थमेव च ।

कपिलामाहरेद्विद्वान् मुनिदेवादिवन्दिताम् ॥ 13.

कपिलां यः पिबेच्छूद्रः शिवकार्यार्थनिर्मिताम् ।

स पच्यते महाघोरे सुचिरं नरकार्णवे ॥ 14.

(P.9)

5. वर्षकोटिसहस्रेषु यत्पापं समुपार्जितम् ।
घृताभ्यंगेन लिंगस्य दहेत्सर्वं न संशयः ॥ 15.
कल्पकोटिसहस्रेषु यत्पापं समुपार्जितम् ।
घृताभ्यंगेन लिंगस्य दहत्यग्निरिवेन्धनम ॥ 16.
कृष्णाष्टम्यां घृतस्नानं कृत्वा लिंगे सकृन्नरः ।
कुलैकविंशमुद्धृत्य शिवलोके महीयते ॥ 17
आयुतं योगवान्दद्यात् दोग्ध्रीणां वेदपारगे ।
वस्त्रादिहेमयुक्तानां घृतस्नानेन तत्फलम् ॥ 18.
सदोदकेन पयसा यो लिंगं स्नापयेन्नरः ।
राजतेन विमानेन सोमलोके महीयते ॥ 19
स्नाप्य दध्ना सकृल्लिंगं विष्णुलोके महीयते ।
मधुना स्नापयित्वा तु वह्निलोकं स गच्छति ॥ 20.
स्नापयेत्तिलतैलेन हस्त्यश्वोद्भवेन च ।
श्वेतपीतकपिलैर्वा वायुलोके महीयते ॥ 21.
स्नानमिक्षुरसेनापि यो लिंगं सकृदाचरेत् ।
लभेद्वैद्याधरं लोकं सर्वकामसमन्वितम् ॥ 22.
फलोदकेन यो लिंगं भक्त्या संस्नापयेन्नरः ।
उत्सृज्य पापकलिलं पितृलोके महीयते ॥ 23.
सितेन भस्मना स्नाप्य सकृल्लिंगं प्रमोदते ।
चन्द्रांशुनिर्मलः श्रीमान् शिववत्सोममण्डले ॥ 24.

(p.9)

5. वस्त्रपूतेन तोयेन यो लिंगं स्नापयेन्नरः ।
सर्वकामसुतृप्तात्मा वारुणं लोकमाप्नुयात् ॥ 25

कुशोदकेन यो लिंगं भक्त्या स्नापयते सकृत् ।
कांचनेन विमानेन ब्रह्मलोके महीयते ॥ 26.

गन्धचन्दनतोयेन स्नापयेत्सकृदीश्वरम् ।
गन्धर्वलोकमाप्नोति गन्धर्वैश्च स पूज्यते ॥ 27.

पुष्पोदकेन साबित्र्यं कौबेरं हेमवारिणा ।
रत्नोदकेन माहेन्द्रं लोकं प्राप्य स मोदते ॥ 28.

पाटलोत्पलपद्मानि करबीराणि सर्वदा ।
स्नानतोयेषु योज्यानि स्थिराणि सुरभीणि च ॥ 29.

एषामेकतमं स्नानं यः कुर्याद्भक्तितः शिबे ।
विधूय पापकलिलं शिबलोके महीयते ॥ 30.

कर्पूरागरुतोयेन यो लिंगं स्नापयेत्सकृत् ।
सर्वपापबिनिर्मुक्तः शिबलोके महीयते ॥ 31.

मंत्राष्टशतजप्तेन विमलेनाम्भसा शिबम् ।
स्नापयित्वा सकृद्भक्त्या शिबलोके महीयते ॥ 32.

पितॄनुद्दिश्य यो लिंगं स्नापयेच्छीतवारिणा ।
तृप्ताः स्वर्गं प्रयास्यन्ति पितरो नरकादपि ॥ 33.

लिंगं शीताम्बुना स्नाप्य धारोष्णपयसा ततः ।
स्नाप्य पश्चाद्घृतेनापि कृतमेकं बिशिष्यते ॥ 34.

5. एतत्स्नानत्रयं कृत्वा पूजयित्वा च भक्तितः ।
(Pl.9) अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ 35
मृत्कुंभात्ताम्रकुंभेन स्नानं शतगुणोत्तरम् ।
रौप्यं लक्षोत्तरं पुण्यं हैमैः कोट्यधिकं भवेत् ॥ 36.
लिंगस्य दर्शनं पुण्यं दर्शनात्स्पर्शनं शुभम् ।
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम् ॥ 37.
इहामुत्र कृतं पापं घृतस्नानेन देहिनाम् ।
क्षमते शंकरो यस्मात् तस्मात्स्नानं समाचरेत् ॥ 38.
दशापराधं तोयेन क्षीरेण तु शतं तथा ।
सहस्रं क्षमते दध्ना घृतेनाप्ययुतं शिवः ॥ 39.
नैरन्तर्येण यो मासं घृतस्नानं समाचरेत् ।
एकविंशत्कुलोपेतः क्रीडते दिवि रुद्रवत् ॥ 40.
जलस्नानं पलशतं (ज्ञेयं) अभ्यंगः पंचविंशतिः ।
(Pl.10) पलानां द्वे सहस्रे तु महास्नानं | भक्तितः ॥ 41.
घृताभ्यंगे घृतस्नाने यत्नाल्लिंगं विरूक्षयेत्
यवगोधूमजैश्चूर्णैः तोषयेद्गन्धयोजितैः ॥ 42.
सुखोष्णेनाम्भसा चापि स्नापयेत्तदनन्तरम् ।
घर्षयेद्बिल्वपत्रैश्च तत्र पीठं च शोधयेत् ॥ 43.
दशकोटिसहस्राणि यद्दत्वा लभते फलम् ।
तत्फलं लभते मर्त्यो लिंगस्योद्वर्तने कृते ॥ 44.

(PL10) 5

अर्घ्यं पुष्पजलोपेतं यः शिवाय निवेदयेत् ।
स पूज्यः सर्वलोकेषु शिववन्मोदते चिरम् ॥ 45.

गन्धोदकेन संमिश्रं उदकार्घ्यं दशोत्तरम् ।
पंचगव्यसमायुक्तं अर्घ्यं शतगुणं भवेत् ॥ 46.

अर्घ्यमष्टांगमापूर्य लिंगमूर्ध्नि निवेदयेत् ।
दशवर्षसहस्राणि रुद्रलोके महीयते ॥ 47.

आपः क्षीरं कुशाग्राणि दध्याज्यं च सतण्डुलम् ।
तिलसिद्धार्थकैश्चैवं अर्घ्योऽष्टांगः प्रकीर्तितः ॥ 48.

दारुवेण्वर्घ्यपात्रेण यद्दत्वा लभते फलम् ।
तस्माच्छतगुणं पुण्यं मृत्पात्रेण प्रकीर्तितम् ॥ 49.

ताम्रपात्रेऽर्घ्यदानेन पुण्यं शतगुणोत्तरम् ।
पलाशपद्मपात्राणां ताम्रपात्रे समं भवेत् ॥ 50.

रौप्यपात्रेण विज्ञेयं अर्घ्यं लक्षगुणोत्तरम् ।
सुवर्णपात्रविन्यस्तं अर्घ्यं कोटिगुणोत्तरम् ॥ 51.

रौप्यपात्रप्रदानेन यत्फलं वेदपारगे ।
तस्माच्छतगुणं पुण्यं शिवमृत्पात्रदानतः ॥ 52.

हेमपात्राणि यद्दत्वा पुण्यं स्याद्वेदपारगे ।
ताम्रपात्रप्रदानेन तस्माच्छतगुणं शिवे ॥ 53.

फलं कोटिं सुवर्णस्य यो दद्याद्वेदपारगे ।
शिवाय रौप्यपात्रेण तस्य पुण्यं ततोऽधिकम् ॥ 54.

(PL 10)

5. हेमपात्रं तु यो भक्त्या शिवाय विनिवेदयेत् ।
न तस्य शक्यते वक्तुं पुण्यानन्त्यं विशेषतः ॥ 55
तुल्यमेव फलं प्रोक्तं शिवे चाढ्यदरिद्रयोः ।
तयोरप्यधिकं तस्य यः शिवे भावनाधिकः ॥ 56.
विभवे सति यो मोहान् न कुर्याद्विधिविस्तरम् ।
नैव तत्फलमाप्नोति प्रलोभाक्रान्तमानसः ॥ 57.
तावत्पत्रैः फलैः पुष्पैः तोयाद्यैश्चैव यत्कृतम् ।
तदनन्तफलं ज्ञेयं भक्तिरेवात्र कारणम् ॥ 58.
लिंगस्यालेपनं कुर्याद् दिव्यगन्धैः सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं रुद्रलोके महीयते ॥ 59
गन्धानुलेपनात्पुण्यं द्विगुणं चन्दनस्य तु ।
चन्दनादगरु ज्ञेयं पुण्यमष्टगुणाधिकम् ॥ 60
कृष्णागरोर्विशेषेण द्विगुणं फलमिष्यते ।
तस्माच्छतगुणं पुण्यं कुंकुमस्य विधीयते ॥ 61.
चन्दनागरुकर्पूरैः कृष्णपिष्टैः सकुंकुमैः ।
लिंगं पर्याप्तमालिप्य कल्पकोटिं वसेद्दिवि ॥ 62.
संवीज्य तालवृन्तेन लिंगं गन्धैः प्रलेपितम् ।
वर्षकोटिसहस्राणि वायुलोके महीयते ॥ 63.
भक्त्या निवेद्य रुद्राय तालवृन्तं सुशोभनम् (भितम्) ।
दशवर्षसहस्राणि रुद्रलोके महीयते ॥ 64.

(PL.10)

5. मयूरव्यजनं दत्वा शिवायातीव शोभनम् ।
वर्षकोटिशतं पुण्यं रुद्रलोके महीयते ॥ 65.
शिवाय चामरं दत्वा मणिदण्डविभूषितम् ।
हेमरौप्यादिदण्डं वा तस्य पुण्यफलं शृणु ॥ 66.
चामरासक्तहस्ताभ्र- दिव्यस्त्रीपरिवारितः ।
हेमरौप्यविमानस्थः चिरं शिवपुरे वसेत् ॥ 67.
इत्यर्चना प्रकाराद्यैः अनु. पुण्यसंचयः ।
सनत्कुमारः ॥.
पुष्पैः कतिविधैः पूजा कर्तव्या कथयस्व मे ॥ 68.
नन्दिकेश्वरः ॥.
पुष्पैरारण्यसंभूतैः पत्रैर्वा गिरिसंभवैः ।.
अपर्युषित निश्छिद्रैः प्रोक्षितैर्जन्तु वर्जितैः ॥.69
आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेच्छिवम् ।

(PL.11)

पुष्पजातिविशेषेण भवेत्पुण्यं ततोऽधिकम् ॥ 70.
तपःशीलगुणोपेते पात्रे दवस्य (वेद) पारगे ।
दत्वा सुवर्णमयुतं तत्फलं कुसुमे शुभे ॥ 71.
अर्कस्य पुष्पे चैकस्मिन् शिवाय विनिवेदिते ।
दश दत्वा सुवर्णानि यत्फलं तदवाप्नुयात् ॥ 72.
श्वेतार्कस्य विशेषेण द्विगुणं फलमिष्यते ।
एवं पुष्पविशेषेण फलं तस्य ततोऽधिकम् ॥ 73.

(P. 11) 5

| | | |
|---|---|---|
| पुष्पजातिविशेषेण | यथा स्यात्तन्निबोधत | । |
| अर्कपुष्पसहस्रेभ्यः | करवीरं विशिष्यते | ॥74. |
| करवीरसहस्रेभ्यो | बिल्वपत्रं विशिष्यते | । |
| बिल्वपत्रसहस्रेभ्यो | बकपुष्पं विशिष्यते | ॥75. |
| बकपुष्पसहस्राणां | एकं धुर्धूरकं परम् | । |
| धुर्धूरकसहस्रेभ्यो | बृहत्पुष्पं विशिष्यते | ॥76. |
| अपामार्गसहस्रेभ्यो | कुशपुष्पं विशिष्यते | । |
| कुशपुष्पसहस्रेभ्यः | शमिपुष्पं विशिष्यते | ॥77. |
| नीलोत्पलसहस्रेण | यो मालां संप्रयच्छति | । |
| शिवाय (शिवस्य) विधिवद्भक्त्या | तस्य पुण्यफलं शृणु | ॥78. |
| कल्पकोटिसहस्राणि | कल्पकोटिशतानि च | । |
| वसेच्छिवपुरे श्रीमान् | शिवतुल्यपराक्रमः | ॥79. |
| शेषाणां पुष्पजातीनां | यत्फलं परिकीर्तितम् | । |
| तत्फलस्यानुसारेण | शिवलोके महीयते | ॥80. |
| शमिपुष्पं बृहत्याश्च | कुसुमं तुल्यमेव च | । |
| करवीरसमा ज्ञेया | जाती विजयपाटलाः | ॥81. |
| श्वेतमन्दारकुसुमं | सितपद्मसमं भवेत् | । |
| नागचम्पकपुन्नागा | धुर्धूरकसमाः स्मृताः | ॥82. |
| केतकी माधवी चैव | कुन्दयूथीमदन्तिका | । |
| शिरीषसर्जबन्धूक- | कुसुमानि विवर्जयेत | ॥83. |

(P. 11)

५. आम्लकीकुसुमं पत्रं करजे तु तद्भवम् ।
वैभीतकानि पत्राणि तत्पुष्पाणि च वर्जयेत् ॥ ८४.
निर्गन्धान्युग्रगन्धानि यानि तानि विवर्जयेत् ।
गन्धवन्त्यपवित्राणि यानि तानि विवर्जयेत् ॥ ८५.
गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ।
सात्विकं तच्च कुसुमं अपवित्रं तु तामसम् ॥ ८६.
कनककदम्बानि रात्रौ देयानि शंकरे ।
दिवा शेषाणि पुष्पाणि दिवा रात्रौ च मल्लिका ॥ ८७.
प्रहरं तिष्ठते जातिः करवीरमहर्निशम् ।
कीटकेशोपविद्धानि शीतपर्युषितानि च ॥ ८८.
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ।
मुकुलैर्नार्चयेद्देवं अर्चिते सति कुड्मले ॥ ८९.
अपक्वं यातयामं च शिवाय न निवेदयेत् ।
लवणानामसंख्यानां राशिस्तेन धृतेन यत् ॥ ९०.
फलं क्वथितविद्धं च यत्नात्पक्वमपि त्यजेत् ।
अलाभेन तु पुष्पाणां पत्राण्यपि निवेदयेत् ॥ ९१.
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ।
फलानामप्यलाभे तु तृणगुल्मौषधीरपि ॥ ९२.
ओषधीनामलाभे तु मानसं परमं शुभम् ।
प्रत्येकमुक्तपुष्पेषु दश साहस्रिकं फलम् ॥ ९३.

5. सन्निबन्धेषु तेष्वेव द्विगुणं फलमिष्यते ।
(P.L.11) सुगन्धैर्मुक्तपुष्पैर्यः सम्यग्लिंगं प्रपूजयेत् ॥ 94.
मालाभिर्वा सुघटितैः अनन्तं फलमाप्नुयात् ।
बिल्वपत्रैरखण्डैश्च सकृल्लिंगं प्रपूजयेत् ॥ 95
सर्वपापविनिर्मुक्तः शिवलोके महीयते ।
धुर्धुरकैश्च यो लिंगं सकृत्पूजयते नरः ॥ 96.
स गोलक्षप्रदानस्य शिवं प्राप्य फलं लभेत् ।
बृहतीकुसुमैर्भक्त्या यो लिंगं सकृदर्चयेत् ॥ 97
गवामयुतदानस्य फलं प्राप्य शिवं व्रजेत् ।
अपामार्गस्य पत्रैश्च यो लिंगं सकृदर्चयेत् ॥ 98.
स गवां कोटिदानस्य फलं प्राप्य शिवं व्रजेत् ।
(P.L.12) मल्लिकोत्पल|निर्गुण्डी जातिपुंनागचम्पकाः ॥ 99.
अशोकश्वेतमन्दार- कर्णिकारबकानि च ।
करवीरार्कमन्दार- शमीतगरकेसरम् ॥ 100.
कुशापामार्गकुमुद- कदम्बद्रोणकानि च ।
नन्द्यावर्तकशम्याक- तिलकं नवमालिका ॥ 101.
करंजनागद . . . व्रजादिभिः ।
सौगन्धिकसनागैश्च सिन्धुश्रीफलकार्जुनैः ॥ 102.
एकपत्रारविन्दाभ्यां विष्णुक्रान्तिदकोत्पलैः ।
दुर्वरैः पारिभद्रैश्च ब्रह्मवृक्षप्रसूनकैः ॥ 103.

(p.12) 5.

आम्लातकसूनैश्च चूतजम्बुकपल्लवैः ।
दूर्वाग्रैः श्वेतदूर्वैश्च ताळपुष्पैर्विशेषतः ॥ 104.
तुळसीकुरवाकोळ- नागैर्वकुळसौरभैः ।
पुष्पैरेतैर्यथाकामं यो नरः पूजयेच्छिवम् ॥ 105.
स च यत्फलमाप्नोति तदेकाग्रमनाः शृणु ।
कोटिसूर्यप्रतीकाशैः विमानैः सार्वकामिकैः ॥ 106.
पुष्पमालापरिक्षिप्तैः गीतवादित्रनादितैः ।
तन्त्रीमधुरवाद्यैश्च स्वच्छन्दगमनालसैः ॥ 107.
रुद्रकन्यासमाकीर्णैः देवदानवकिंनरैः ।
धूयमानश्चामरैः स्तूयमानः सुरासुरैः ॥ 108.
गच्छेच्छिवपुरं दिव्यं यत्र वा रुचितं भवेत् ।
यैस्तैर्वापीह कुसुमैः जलजैः स्थलजैः शिवम् ॥ 109.
संपूज्य प्रोक्षितैर्भक्त्या शिवलोके महीयते ।
शिवस्योपरि यः कुर्यात् सुघनं पुष्पमण्डपम् ॥ 110.
शोभितं पुष्पमालाद्यैः आपीठान्तं प्रलम्बिभिः ।
अत्याश्चर्यैर्महायानैः दिव्यपुष्पोपशोभितैः ॥ 111.
सर्वैः परिवृतः श्रीमान् गच्छेच्छिवपुरं सुखी ।
स पुष्पकविमानानां सहस्रैः परिवारितः ॥ 112.
दिव्यस्त्रीसुखसंभोग- क्रीडारतिसमन्वितः ।
अक्षय्यं मोदते कालं अतिरस्कृतशासनः ॥ 113.

(P.112)

5 शिवादिसर्वलोकेषु यत्रेष्टं तत्र याति सः ।
पूजासु भक्तिविश्वास रचितादिषु सर्वदा ॥ ११४.
फलमेवं समासेन ज्ञेयं वित्तानुसारतः ।
साक्षान्निर्वेदयेद्वेदीं लिंगं संपूजयेन्नरः ॥ ११५.
शिवो देव्याच पुत्रेण मोदते पूजयानया ।
लिंगवेदी भवेद्देवी लिंगं साक्षान्महेश्वरः ॥ ११६.
तयोः संपूजनाद्भक्त्या देवीदेवश्च पूजितौ ।
स्वयमुत्पाद्य पुष्पाणि यः शिवं पूजयेत्सदा ॥ ११७
तानि साक्षात्प्रगृह्णाति तद्भक्त्या सततं शिवः ।
यः कुर्याच्च शिवारामं आम्रबिल्वादिशोभितम् ॥ ११८.
जातीविजयराजार्क करवीराब्जकुब्जकैः ।
पुंनागनागबकुलैः अशोकोत्पलचम्पकैः ॥ ११९.
कदलीहेमयूथाद्यैः तस्य पुण्यफलं शृणु ।
यावत्तत्पत्रकुसुमं बीजमूलफलानि च ॥ १२०
तावद्वर्षसहस्राणि. रुद्रलोके महीयते ।
लाक्षां प्रामाण्यनिर्मुक्त- सूपं दद्यात्सकृच्छिवे ॥ १२१.
चतुर्वेदिगृहे जन्म प्राप्नोति सततं सुखी ।
कृष्णागरुसकर्पूरं धूपं दद्यान्महेश्वरे ॥ १२२.
नैरन्तर्येण मासार्धं तस्य पुण्यफलं शृणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ १२३.

(P.L.12)

5. भुक्त्वा शिवपुरे भोगं तस्यात्यन्ते महीपतिः ।
गुग्गुलुं घृतसंयुक्तं साक्षाद्दहति शंकरः ॥ 124.
मासार्धमात्रदानेन शिवलोके महीयते ।
शिवकृष्णचतुर्दश्यां यः साज्यं गुग्गुलुं दहेत् ॥ 125.
अपराधसहस्रं तद् इहामुत्र कृतं क्षमेत् ।
देवदारुं नमेरुं च सर्जश्रीवासकुन्दुरम् ॥ 126.
श्रीफलं चाज्यसंमिश्रं दत्वाप्नोति परां श्रियम् ।
एभ्यः सुगन्धिकर्पूरं षट्सहस्रगुणोत्तरम् ॥ 127.
अगरुं दशसाहस्रं द्विगुणं चासितागरुम् ।
गुग्गुलुं दशसाहस्रं सघृतं द्विगुणं भवेत् ॥ 128.
प्रियश्च गुग्गुलुर्नित्यं आज्ययुक्तो विशेषतः ।
द्विसाहस्रो फलानां तु महिषाक्षस्य गुग्गुलोः ॥ 129.
दग्धवाज्येन तु संमिश्रं शिवतुल्यः प्रजायते ।

(P.L.13)

अगरुं घृतसंयुक्तं |फलानि च ॥ 130.
अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः ।
शोधयेत्पापसंयुक्तं पुरुषं नात्र संशयः ॥ 131.
कृष्णागरूद्भवो धूपः तुषास्तुरिव कांचनम् ।
योऽन्तः शिवगृहं भक्त्या सुगन्धेन प्रलेपयेत् ॥ 132.
कवाटद्वारकुड्यान्तं तिर्यगूर्ध्वं सवेदिकम् ।
वासयेत्पुष्पमालाभिः धूपैश्चापि सुगन्धिभिः ॥ 133.

(P.18)

5. यः कुर्यात्सकृदप्येवं पुण्यं तस्यावधारय ।
सर्वकामैश्च संपूर्णो महायानैः सहस्रशः ॥ 134.
आपूरयं दिशः सर्वाः आमोदैश्च सुगन्धिभिः ।
कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ॥ 135.
तस्यान्ते धर्मशेषेण त्रैलोक्याधिपतिर्भवेत्
स्नताबृतौ च यः कुर्या- द्दिव्यगन्धैः शिवालयम् ॥ 136.
स समस्तकुलोपेतः शिवलोके महीयते ।
त्रिवृच्छुल्सु पीतं वा पट्टसूत्रादिनिर्मितम् ॥ 137.
दत्वोपवीतं रुद्राय भवेद्वेदान्तगोचरः ।
वासांसि सुविचित्राणि सारवन्ति मृदूनि च ॥ 138.
धूपितानि शिवे दद्याद् विकेशानि नवानि च ।
यावत्तद्वस्त्रतन्तूनां परिमाणं समन्ततः ॥ 139.
तावद्युगसहस्राणि रुद्रलोके महीयते ।
त्रुटिमात्रं तु यो दद्याद् हेम लिंगस्य मूर्धनि ॥ 140.
इन्द्रस्याधासने तावद् यावदिन्द्राश्चतुर्दिशः ।
एवं वित्तानुसारेण फलं ज्ञेयं समासतः ॥ 141.
सर्वेषां मणिपट्टानां मकुटादेर्विशेषतः ।
योऽर्कपत्रपुटं पूर्णं मधुपर्कं सुमंत्रितम् ॥ 142.
निवेदयेत शर्वाय सोऽश्वमेधफलं लभेत् ।
शालिनां तण्डुलं प्रस्थं कुर्यादन्नं सुसंस्कृतम् ॥ 143.

(PL.13)

5. शिवाय तण्डुकं दद्यात् चतुर्दश्यां विशेषतः ।
हारिद्रं कृसरं शुद्धं पायसं वा चरुं स्तथा ॥ 144.
गुडखण्डाज्य संमिश्रं नैवेद्यं परिकल्पयेत् ।
यावन्तस्तण्डुलास्तस्मि- न्नैवेद्य परिसंख्यया ॥ 145.
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
गुडखण्डकृतानां च भक्ष्याणां च निवेदने ॥ 146.
घृतेन पाचितानां तु पुण्यं शतगुणं भवेत् ।
मज्जिकापानकानां तु भक्ष्यार्धं फलमिष्यते ॥ 147.
तदर्धं सलिलस्यापि वासितस्य निवेदने ।
मातुलुंगफलादीनि पक्वानि च निवेदयेत् ॥ 148.
शिवाय तत्फलं तस्य भक्ष्याणां यन्निवेदने ।
पंचसौगन्धिकोपेतं ताम्बूलं च निवेदयेत् ॥ 149.
शिवाय गुरवे चैव तस्य पुण्यफलं शृणु ।
सुगन्धदेहस्तेजस्वी सर्वावयवसुन्दरः ॥ 150.
वर्षकोटिशतं दिव्यं शिवलोके महीयते ।
घृतदीपप्रदानेन शिवाय शतयोजनम् ॥ 151.
कंपयित्वा ततो याति विमानैः सूर्यसप्रभैः ।
गच्छेच्छिवपुरं दिव्यं यावदाभूतविप्लवम् ॥ 152.
तस्यान्ते स महीपालो ब्राह्मणो वाऽभिजायते ।
यः कुर्यात्कार्तिके मासि शोभनां दीपमालिकाम् ॥ 153.

(PL 13)

5. घृतेनैव चतुर्दश्यां पौर्णमास्यां तथापि वा ।
सूर्यकोटिप्रतीकाशैः तेजोभिर्भासयेद्दिशः ॥ 154.
तेजोराशिविमानस्थः कुलमुद्धृत्य सर्वशः ।
यावत्प्रदीपसंख्यानं घृतेनापूर्य बोधितम् ॥ 155
तावद्युगसहस्राणि रुद्रलोके महीयते ।
दीपवृक्षं समुद्धृत्य लोहमुख्यं शिवालये ॥ 156.
पूर्वस्माद्द्विगुणं पुण्यं लभते नात्र संशयः ।
कापिलेन घृतेनैव सूक्ष्मतन्तुकृतेन च ॥ 157.
सकृद्दीपं शिवे दद्यात् तस्य पुण्यफलं शृणु ।
सूर्यकोटिप्रतीकाशैः विमानैः सार्वकामिकैः ॥ 158.
गच्छेत्सोऽपि शिवं लोकं यावदाभूतसंप्लवम् ।
तस्या देहसमन्वितः ॥ 159.
ज्ञानयोगं समासाद्य तत्रैव स विमुच्यते ।
शिरसा धारयेद्दीपं सर्वरात्रं शिवाग्रतः ॥ 160.
ललाटे वाथ हस्ताभ्यां उद्युक्तश्च तथोरसि ।
सूर्यायुतप्रतीकाशैः विमानैः सार्वकामिकैः ॥ 161.
(PL 14)
कल्पायुतशतं दिव्यं रुद्रलोके महीयते ।
भेरीमृदंगमुरज - तिमिलो पटहा (कम) दिभिः ॥ 162.
वंशकांस्यादिवादित्रं यः शिवाय निवेदयेत् ।
स विमानैर्महाभोगैः वंशवीणाकृतस्वनैः ॥ 163.

16/5/59.

(PL14)

5. शिवस्य पुरतो दद्याद् दर्पणं चारु निर्मलम् ॥ 162.
पर्यन्तं शोभितं कृत्वा श्वेतमाल्यैः सचन्दनैः ।
चन्द्रांशुनिर्मलः श्रीमान् सुभगः कामरूपधृक् ॥ 163.
कल्पायुतसहस्राणि रुद्रलोके महीयते ।
कृत्वा प्रदक्षिणं भक्त्या शिवस्योभयथा नरः ॥ 164.
अश्वमेधसहस्रस्य लभते फलमुत्तमम् ।
नमस्कारः स्मृतो यज्ञः सर्वयज्ञोत्तमः शिवे ॥ 165.
नमस्कृत्वा महादेवं अश्वमेधफलं लभेत् ।
प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत् ॥ 166.
स यां गतिमवाप्नोति न तां यज्ञशतैरपि ।
सर्वयज्ञोपवासेषु सर्वतीर्थेषु यत्फलम् ॥ 167.
स्तुतिजप्योपहारेण शिवे तत्फलमाप्नुयात् ।
श्वेतं महाध्वजं दद्यात् कृत्वा वै पंचरंगिकम् ॥ 168.
किंकिणीरवलोपेतं मयूरच्छत्रभूषितम् ।
स सितेन विमानेन सर्वेषां चोपरि स्थितः ॥ 169.
मन्वन्तरसहस्रं तु मोदते दिवि रुद्रवत् ।
ध्वजमालाकुलं कुर्यात् प्राकारालयमध्यतः ॥ 170.
महाध्वजाष्टकं वापि दिग्विदिक्षु निवेदयेत् ।
स विमानसहस्रेण दिव्याश्वपरिशोभिना ॥ 172.

(PL14) 8 कल्पायुतसहस्राग्रं मोदते दिवि रुद्रवत् ।
शरच्चन्द्रांशुविमलं मुक्तामालोपशोभितम् ॥ 173.
मणिदण्डं सचतुरं दद्यात्कांचननिर्मितम् ।
सच्छत्रैश्च विचित्रैश्च धार्यमाणैश्च शोभितम् ॥ 174.
विमानैः सर्वसंभोगैः चिरं शिवपुरं व्रजेत् ।
यदि चेद्राज्यमाकांक्षेद् देही कालविपर्ययात् ॥ 175.
भुंक्ते समुद्रपर्यन्तां एकच्छत्रां वसुन्धराम् ।
यः शृंखला समायुक्तां महाघण्टां महास्वनाम् ॥ 176.
कांस्यलोहमयीं वापि बन्धयेद्यो शिवालये ।
घण्टाकर्णगणः श्रीमान् शिवस्यातीववल्लभः ॥ 177.
शिवतुल्यबलो भूत्वा शिवलोके महीयते ।
भेरीमृदंगमुरव- तिमिलोपटहादिकम् ॥ 178.
वंशकांस्यादिवादित्रं यः शिवाय निवेदयेत् ।
स विमानैर्महाभोगैः वंशवीणाकृतस्वनैः ॥ 179.
युगायुतशतं दिव्यं शिवलोके महीयते ।
स्त्रीणां संगीतदानेन सनाट्येन विशेषतः ॥ 180.
यथेष्टमैश्वरे लोके मोदते कालमक्षयम् ।
महास्वनं तु यो दद्याच् छंखयुग्मं शिवाय तु ॥ 181.
युगकोटिशतं दिव्यं रुद्रलोके महीयते ।
वितानं सितपद्माभं मध्ये कमलभूषितम् ॥ 182.

(PL14)

5. विचित्रमेकवर्णं वा नानावर्णोपशोभितम् ।
किंकिणीरवकोपेतं कन्दुकैश्चोपशोभितम् ॥ 183.
कम्बकैर्मुक्तादामैश्च घण्टाचामरभूषितम् ।
शिवस्योपरि यो दद्यात् पुरतो वापि कल्पयेत् ॥ 184.
रुद्रवत्सर्वलोकेषु युगकोटिं स मोदते ।
शिवस्योपरि यो दद्यात् सर्वरत्नोपशोभितम् ॥ 185.
मण्डपं मौक्तिकं श्रीमान् तस्य पुण्यफलं शृणु ।
कोटिकोटिविमानैश्च सर्वकामसमन्वितः ॥ 186.
आभूतसंप्लवं यावत् तावच्छिवपुरे वसेत् ।
शिवस्यायतने कुर्याद् वस्त्रपूजां सुशोभनम् ॥ 187.
दुकूलपट्टदेवांगैः वस्त्रैरन्यैश्च शोभनैः ।
वस्त्रादिपट्टतन्तूनां (भवेत्) संख्या तु यावति ॥ 188.
तावद्युगसहस्राणि रुद्रलोके महीयते ।
शिवभक्त्या जगत्सर्वं वृष्टिसारेण सार्यते ॥ 189.
यत्संधार्यं जगत्पुण्यं अग्निकार्येण तद्भवेत् ।
जगतो धारणं कुर्याद् अग्निकार्यं विशेषतः ॥ 190.
यः कुर्यादिष्टकागारं रुद्राग्नेरतिशोभनम् ।
सकृत्त्वाग्निकार्येण रुद्रसायुज्यमाप्नुयात् ॥ 191.
शिवाग्निकार्यं यः कृत्वा कुर्यात्त्र्यायुषमात्मनः ।
दशभिर्मुच्यते पापैः सितेन शिवभावना ॥ 192.

5 कृत्वा शिवालयप्रान्ते दशमण्डलकानि तु ।

(PL15) सर्वपाकान्नसंयुक्तः तेषु नित्यं बलिं हरेत् ॥ 193.

अर्घ्यं पुष्पजलोपेतं ताम्रपात्रे प्रकल्पयेत् ।

रुद्रमातृगणादीनां देवतानां च सर्वतः ॥ 194.

यः कुर्यात्सकृदप्येवं दशदिक्षु बलिक्रियाम् ।

दशवर्षसहस्राणि रुद्रलोके महीयते ॥ 195.

रौद्रं संध्याबलिं कृत्वा नित्यं पर्वसु वा निशि ।

कल्पायुतशतं साग्रं शिवलोके महीयते ॥ 196.

दधिभक्तमयं लिंगं हेमपात्रादिसंस्थितम् ।

पुष्पधूपार्चितं कृत्वा विमानोपरि शोभितम् ॥ 197.

शिरसा धारयन्पात्रं शनैर्गच्छेत्प्रदक्षिणम् ।

शिवायतनपर्यन्तं शंखभेर्यादिनिस्वनैः ॥ 198.

दर्पणैर्ध्वजमालाभिः गेयनृत्तादिभिः सह ।

चित्रचामरधूपाद्यैः यष्टिदीपादिभिस्तथा ॥ 199.

तच्छेषं दधिभक्तेन लिंगस्य पुरतः स्थितम् ।

पुष्पाक्षतविमिश्रेण पीठे तदुपसंहरेत् ॥ 200.

एतेन मातरो रुद्रो शिवो वा षण्मुखादयः ।

शान्तिं जुषन्ति सुप्रीता रौद्रेण बलिना सदा ॥ 201.

शिवमाल्यापनयनं पूजान्ते भूप्रमार्जनम् ।

एकैकमेव तुल्यं स्यात् चान्द्रायणफलेन तु ॥ 202.

(P.15)

6. शिवमण्डलकं कृत्वा हस्तमात्रं शिवाग्रतः ।
यः कुर्यादक्षतैः पुष्पैः पत्रैर्वाप्यथ केवलैः ॥ 203.
सुरूपः सुभगः श्रीमान् तेजस्वी वेदवित्सुखी ।
चतुर्वेदीगृहे जन्म सकृत्कृत्वा लभेन्नरः ॥ 204.
एवं स्वस्तिकपद्माद्यैः भूमिशोभां शिवालये ।
कृत्वा वर्णकपिष्टाद्यैः तस्माच्छतगुणं भवेत् ॥ 205.
शिवयज्ञोपकरणं दत्वाल्पं यदि वा बहु ।
स च वित्तानुसारेण शिवलोके महीयते ॥ 206.
शिवमुद्दिश्य यद्दत्तं सर्वकारणकारणम् ।
तदनन्तफलं दातु- भवतीति किमद्भुतम् ॥ 207.
यद्यदिष्टं विशिष्टं च न्यायेन समुपार्जितम् ।
तच्छिवाय निवेद्यं स्यात् भक्त्यानन्तफलार्थिभिः ॥ 208.
कर्मशाठ्येन यः कुर्यात् मूल्येनापि शिवालये ।
सोऽपि शाठ्याद्दिवं याति पापवर्जितकर्मणा ॥ 209.
कृत्वारामान्नपानादि शिवायतनकर्मसु ।
उपयुक्तानि भूतानि खननोत्पाटनेषु च ॥ 210.
अकामतोऽपि सर्वाणि चराणि स्थावराणि च ।
दिवं प्रयान्त्यसंदेहं प्रसादात्परमेष्ठिनः ॥ 211.
(भावा written above प्रसादा)
लिंग हस्तशतं सार्धं शिवक्षेत्रं समन्ततः ।
+देहिनां तत्र मरणं शिवसायुज्य कारणम् ॥ 212.

(PL 15)

5. मनुजैः स्थापिते लिंगे क्षेत्रमानमिदं स्मृतम् ।
स्वयंभूते सहस्रं स्याद् आर्षे चैव तदर्धकम् ॥ २१३.
य नरोऽपि यस्तस्मिन् निवसेत शिवालये ।
स याति परमं स्थानं यस्माच्छिवपुरं महत् ॥ २१४.
तस्मादावसथं कुर्यात् शिवक्षेत्रसमीपतः ।
शिवलिंगसमीपस्थं यत्तोयं पुरतः शुभम् ॥ २१५.
शिवलिंगगंगेति तज्ज्ञेयं तत्र स्नात्वा शिवं व्रजेत् ।
यः कुर्याद्दीर्घिकां वापि कूपं चापि शिवालये ॥ २१६.
त्रिसप्तकुलमुद्धृत्य शिवलोके महीयते ।
सर्वमन्यत्परित्यज्य शिवैकाहितमानसः ॥ २१७.
शिवपूजाविधिं कुर्या- द्यदिच्छेच्छुभमात्मनः ।
त्वरितं जीवितं याति त्वरितं याति यौवनम् ॥ २१८.
त्वरितं व्याधिरभ्येति तस्मात्पूज्यः सदा शिवः ।
यावन्नायाति मरणं यावन्नाक्रमते जरा ॥ २१९.
यावन्नेन्द्रियवैकल्यं तावत्पूजय शंकरम् ।
न शिवार्चनतो ह्यस्ति धर्मोऽन्यो भुवनत्रये ॥ २२०.
इति विज्ञाय यत्नेन पूजनीयः सदाशिवः ।
ये भक्ता देवदेवस्य शिवस्य परमेष्ठिनः ॥ २२१.
इहलोके सुखं प्राप्य विन्दन्ति परमं पदम् ।
संपूज्य पशुभर्तारं विशुद्धेनान्तरात्मना ॥ २२२.

(PL 16)

(PL16)

5. कृतांजलिपुटो भूत्वा इदं स्तोत्रमुदीरयेत् ।
शिवं शिवकरं शान्तं शिवात्मानं शिवोत्तमः ॥ २२३.
शिवमार्गप्रणेतारं प्रणमामि सदाशिवम् ।
शाश्वतं शोभनं शुद्धं सर्वदोषप्रमोक्षकम् ॥ २२४.
विश्वं विश्वेश्वरं देवं शंकरं प्रणमाम्यहम् ।
सर्वपापहरं नाथं सर्वरोगहरं शुभम् ॥ २२५.
सर्वबाधाहरं नित्यं नमाम्यार्तिहरं परम् ।.
आस्थानस्थानसंस्थान- संस्थितस्थितिभासकम् ॥ २२६.
शिरस्थानस्थयोगस्थं स्थाणुमीशं नमाम्यहम् ।.
ईशानं पुरुषं घोरं वामं सद्यं महेश्वरम् ॥ २२७.
ईशानं सर्वभूतानां ईश्वरं प्रणमाम्यहम् ।.
ईशानं वरदं देवं ईशानमनन्तनायकम् ॥ २२८.
इति पूजाविधिं पुण्यं यः शृणोति सकृन्नरः ।
स मुक्तः सर्वपापेभ्यः शिवलोके महीयते ॥ २२९.

इति शिवधर्मशास्त्रे शिवार्चन-
द्रव्यपुण्यं नाम पंच
मोऽध्यायः ॥.

(P.16) 6. श्री नन्दिकेश्वरः ॥

अतः परमिदं गुह्यं शिवोद्गीर्णं महोदयम् ।
महाविघ्नप्रशमनं महाशान्तिकरं शुभम् ॥ १
अकालमृत्युमथनं सर्वव्याधिनिवारणम् ।
परचक्रप्रमथनं सदाविजयवर्धनम् ॥ २.
स्तम्भनं परसैन्यस्य रिपुसादकरं सदा ।
सर्वदेवग्रहानीकं सर्वाभीष्टावभासकम् ॥ ३.
सर्वशान्त्यधिकाराख्यं धर्मं वक्ष्यामि शाश्वतम् ।
शशाङ्काधधिरस्त्र्यक्षो नागयज्ञोपवीतवान् ॥ ४.
चतुर्मुखश्चतुर्बाहुः सितभस्मावगुण्ठितः ।
वशी वरेण्यो वरदो देवदेवो महेश्वरः ॥ ५.
त्रैलोक्यनमितः श्रीमान् शान्तिमाशु करोतु मे ।
सर्वावयवमुख्येन गात्रेण तनुमध्यमा ॥ ६.
पीतश्यामाऽतिसौम्येन शिवरूपेण सेवितः ।
ललाटतिलकोपेता चन्द्रलेखार्धधारिणी ॥ ७.
दिव्याम्बरधरा देवी सर्वाभरणभूषिता ।
वरस्त्री सर्वनारीणां शोभागुणमहास्पदम् ॥ ८.
भावनामात्रसंतुष्टा उमादेवी वरप्रदा ।
साक्षादागम्य रूपेण शान्तेनामिततेजसा ॥ ९.

(PL 16)

6. शान्तिं करोतु मे प्रीता भक्तानां भक्तवत्सला ।
पद्मरागद्युतिः सौम्यो रक्तमाल्यानुलेपनः ॥ 10.
अबालो बालरूपेण षण्मुखः शिखिवाहनः ।
पूर्णेन्दुवदनः सौम्यः त्रिशिखाशक्तिसंयुतः ॥ 11.
कृत्तिकोमाग्निरुद्रांग गंगाद्भूतः सुरार्चितः ।
कार्तिकेयो महातेजा वरदानैकतत्परः ॥ 12
शान्तिं करोतु मे नित्यं बलं सौख्यं च सर्वदा ।
श्वेतवस्त्रपरीधानः त्र्यक्षः कनकसप्रभः ॥ 13.
शूलपाणिर्महाप्राज्ञः नन्दीशः शिवभावितः ।
शिवध्यानैकपरमः शिवभक्तिपरायणः ॥ 14.
शान्तिं करोतु मे शान्तो धर्मे च मतिमुत्तमाम् ।
नागयज्ञोपवीती च नागाभरणभूषितः ॥ 15.
सर्वार्थसंपदाधारो गणाध्यक्षो वरप्रदः ।
रुद्रस्य तनयो देवो नायकोऽथ विनायकः ॥ 16.
करोतु मे महाशान्तिं कर्मसिद्धिं च सर्वदा ।
इन्द्रनीलनिभस्त्र्यक्षो दीप्तशूलायुधोद्यतः ॥ 17
रक्ताम्बरधरः श्रीमान् कृष्णांगो नागभूषणः ।
पापापनोदमतुलं अलक्ष्मीमलनाशनः ॥ 18.
करोतु मे महाकालः प्रीतिं प्रीतेन चेतसा ।
पीतवस्त्रपरीधाना कन्यारूपा स्वलंकृता ॥ 19.

6. गणमाताम्बिका ध्यक्षा पुण्या गौरी सुरेश्वरी ।
सर्वसिद्धिप्रदा देवी प्रसादपरमा शिवा ॥ २०.
शान्तिं करोतु मे प्रीता सिद्धिमाशु प्रयच्छतु ।
(P.L.17) | स्निग्धश्यामेन वर्णेन महामहिषमर्दनी ॥ २१.
धनुश्चक्रप्रहरणा शंखयष्ट्यसिधारिणी ।
आतर्जनोद्यतकरा सर्वोपद्रवनाशिनी ॥ २२.
अतिसूक्ष्मोऽतिविक्रान्तः ध्यक्षो भृंगिरिटिर्महान् ।
रुद्रात्मजो रुद्रभक्तो रुद्रैकगतमानसः ॥ २३.
सोपि शान्तात्मभावेन शान्तिमाशु प्रयच्छतु ।
प्रचण्डगणसैन्यस्थो महाटंकाक्षधारकः ॥ २४
अक्षमालार्पितकरः ध्यक्षश्चण्डेश्वरः प्रभुः ।
चण्डपापापहरणो ब्रह्महत्यादिशोधनः ॥ २५.
करोतु मे महायोगी नित्यं कल्याणवर्धनम् ।
शंखकुन्देन्दुतुल्याभः कण्ठे मरकतप्रभः ॥ २६.
अक्षमालाशिरोमस्तु स्वयं ज्ञाने व्यवस्थितः ।
चतुर्मुखश्चतुष्पादः त्रिणेत्रः सर्वदोन्वकः ॥ २७.
क्षितेःपतिर्वरयो देवः सर्वधर्मोत्तमोत्तमः ।
ईशं वहति पृष्ठेन तस्माद्धर्मो जगत्प्रभुः ॥ २८.
वृषो वृषपतिः श्रीमान् करोतु मम शान्तिकम् ।
~~पद्मसंस्थः~~ पद्मनिभः चतुर्वदनपंकजः ॥ २९
पद्मासनः

(P.417)

6 कमण्डलुधरः श्रीमान् देवगन्धर्वपूजितः ।
शिवध्यानैकनिरतः शिवसद्भावभावितः ॥ ३०.
ब्रह्मशब्देन विंध्येन ब्रह्मा शान्तिं करोतु मे ।
तार्क्ष्यासनश्चतुर्बाहुः शंखचक्रगदाधरः ॥ ३१.
श्यामः पीताम्बरधरो वनमालाविभूषितः ।
यस्देवोत्तमो देवो माधवो मधुसूदनः ॥ ३२.
शिवप्रणामपरमः शिवध्यानैकतत्परः ।
शिवार्चनपरो नित्यं विष्णुः शान्तिं करोतु मे ॥ ३३.
पद्मरागप्रभा देवी चतुर्वदनपंकजा ।
अक्षमालार्पितकरा कमण्डलुधरा शुभा ॥ ३४.
ब्रह्माणी सौम्यवदना शिवपूजापरायणा ।
शान्तिं करोतु मे प्रीता ब्रह्मशब्देन सर्वदा ॥ ३५.
हिमशैलनिभा देवी महावृषभवाहना ।
त्रिशूलहस्ता वरदा सर्वाभरणभूषिता ॥ ३६.
रुद्रभक्ता महावीर्या रुद्रार्चनपरा शिवा ।
चतुर्भुजा चतुर्वक्त्रा त्रिणेत्रा पापहारिणी ॥ ३७.
आर्तिं हरतु मे प्रीता ब्रह्मशब्देन सर्वदा ।
- - - - ईश्वरी नित्यमुज्वला ॥ ३८.
मयूरवाहना देवी सिन्दूरारुणविग्रहा ।
शक्तिहस्ता महारूपा सर्वाभरणभूषिता ॥ ३९.

(PL 17)

6. रुद्रभक्ता महापुण्या रुद्रार्चनरता सदा ।
कौमारी वरदा देवी शान्तिमाशु करोतु मे ॥ 40.
शंखचक्रगदाहस्ता श्यामा पीताम्बरप्रिया ।
चतुर्भुजा तार्क्ष्यवाहा वैष्णवी सुरपूजिता ॥ 41.
शिवार्चनरताभक्ता रुद्रैकगतमानसा ।
शान्तिं करोतु मे प्रीता सर्वासुरविमर्दिनी ॥ 42.
वराहघोणा विकटा वराहवरवाहिनी ।
श्यामावदाता विपुला शंखचक्रगदाधरा ॥ 43.
तर्जयन्ती सदा विघ्नान् अर्चयन्ती सदाशिवम् ।
वाराही वरदा देवी क्षेमारोग्यं करोतु मे ॥ 44.
ऐरावतगजारूढा वज्रहस्ता महाबला ।
नेत्राणां तु सहस्रेण भूषिता कनकप्रभा ॥ 45.
सिद्धगन्धर्वनमिता सर्वाभरणभूषिता ।
ऐन्द्री देवी सदाकालं शान्तिमाशु करोतु मे ॥ 46.
ऊर्ध्वकेशोत्कटा छाया निर्मांसस्नायुबन्धना
खड्गघण्टायुधोत्कटा ॥ 47. (marginal: बद्धता)
करालवदना घोरा खड्गघण्टायुधोत्कटा ॥ 47.

(PL 18)

कपालमालिनी देवी क्रूरा खट्वांगधारिणी ।
आरक्तपिंगनयना गजचर्मावगुण्ठिता ॥ 48.
नानानागपरीतांगी प्रेतस्थाननिवासिनी ।
शिवरूपेण घोरेण शिवारावभयंकरी ॥ 49.

(P.L18)

6. चामुण्डा चण्डरूपेण चित्रयंत्रा सनोतु मे ।
भूतप्रेतपिशाचेभ्यो मम रक्षां करोत्विह ॥ 50.
आयुः श्रियं बलं सौख्यं प्रीता भूत्वा ददातु मे ।
आकाशे मातरो दिव्याः तथान्या लोकमातरः ॥ 51.
भूतानां मातरः सर्वाः तथान्याः पितृमातरः ।
सर्वमातृगणा देव्यः स्वायुधव्यग्रपाणयः ॥ 52.
जगद्व्याप्यावतिष्ठन्त्यो बलिकामा महोदयाः ।
रुद्रभक्ता महावीर्या रुद्रार्चनपरायणाः ॥ 53.
शान्तिं कुर्वन्तु मे नित्यं मातरः सुरपूजिताः ।
ये रुद्रा रुद्रकर्माणो रौद्रस्थाननिवासिनः ॥ 54.
सौम्याश्चैव तु ये केचित् सौम्यस्थाननिवासिनः ।
मातरो रुद्ररूपाश्च गणानामधिपाश्च ये ॥ 55.
विघ्नभूतास्तथा ये च दिग्विदिक्षु समाश्रिताः ।
सर्वे सुप्रीतमनसः प्रतिगृह्णन्त्विमां बलिम् ॥ 56.
सिद्धिं कुर्वन्तु मे नित्यं भयेभ्यः पान्तु मां सदा ।
ऐन्द्र्यां दिशि गणा ये तु वज्रहस्ता महाबलाः ॥ 57.
सुश्वेताभाः श्वेतनिभाः तथा वै श्वेतलोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 58.
रुद्रार्चनरता नित्यं शान्तिं कुर्वन्तु मे सदा ।
आग्नेय्यां ये गणाः सर्वे स्रुवहस्ता निषंगिणः ॥ 59.

(p.18)

6. सुरक्ताक्षा रक्तनिभाः तथा वै रक्तलोमभिः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 60.
रुद्रैकाहितचेतस्काः शान्तिं कुर्वन्तु मे सदा ।
याम्यां दिशि गणा ये तु सततं दण्डपाणयः ॥ 61.
सुकृष्णाक्षाः कृष्णनिभाः तथा वै कृष्णलोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 62.
रुद्रैकाहितचेतस्काः शान्तिं कुर्वन्तु मे सदा ।
नैर्ऋत्यां तु गणा ये तु राक्षसाः खड्गपाणयः ॥ 63.
सुनीलाक्षा नीलनिभाः तथा वै नीललोहिताः ।
दिव्यन्तरिक्षभौमाश्च पातालतलवासिनः ॥ 64.
रुद्रध्यानैकपरमाः शान्तिं कुर्वन्तु मे सदा ।
वारुण्यां ये गणाः सर्वे सततं पाशपाणयः ॥ 65.
सुमुक्ताक्षा मुक्तनिभाः तथा वै मुक्तलोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 66.
शिवभक्ता महात्मानः शान्तिं कुर्वन्तु मे सदा ।
वायव्यां ये गणाः सर्वे सततं ध्वजपाणयः ॥ 67.
सुधूम्राक्षा धूम्रनिभाः तथा वै धूम्रलोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 68.
शिवपूजासमायुक्ताः क्षेमं कुर्वन्तु सर्वदा ।
कौबेर्यां ये गणाः सर्वे सततं निधिपाणयः ॥ 69.

(p.18) b. सुपीताक्षाः पीतनिभाः तथा वै पीतलोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 70.
शिवभक्तिपराः सर्वे शान्तिं कुर्वन्तु मे सदा ।
ऐशान्यां वै गणा ये तु सततं शूलपाणयः ॥ 71.
सुश्वेताक्षाः श्वेतनिभाः तथा वै श्वेतलोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 72.
परमेशार्चनरताः शान्तिं कुर्वन्तु मे सदा ।
ऐशान्यां वै गणा ये तु सततं चक्रपाणयः ॥ 73.
सुनीलाक्षा नीलनिभाः तथा वै नीललोहिताः ।
दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 74.
शिवपूजासमायुक्ताः अशुभं नाशयन्तु मे ।
ऊर्ध्वभागे गणा ये तु सततं पाशपाणयः ॥ 75.
सुसूक्ष्माक्षाः सूक्ष्मनिभाः तथा वै सूक्ष्मलोहिताः ।
(p.19) | दिव्यान्तरिक्षभौमाश्च पातालतलवासिनः ॥ 76.
शिवपूजासमायुक्ताः अशुभं नाशयन्तु मे ।
एते गणा महात्मानो महाबलपराक्रमाः ॥ 77.
शिवं संपूज्य यत्नेन बलिमेषां विनिक्षिपेत् ।
ततः सुप्रीतमनसा शान्तिं कुर्वन्तु मे सदा ॥ 78.
अमरावती पुरी नाम पूर्वभागे व्यवस्थिता ।
विद्याधरगणाकीर्णा सिद्धगन्धर्वसेविता ॥ 79.

(p.19)

6. रत्नप्राकारनिचिताः महारत्नोपशोभिताः ।
तत्र देवपतिः श्रीमान् वज्रपाणिर्महाबलः ॥ 80.
नेत्राणान्तु सहस्रेण शोभनेन विराजिते ।
ऐरावतगजारूढो हेमवर्णो महाद्युतिः ॥ 81.
देवेन्द्रः सततं हृष्टः परमेशार्चने रतः ।
शिवध्यानैकसंपन्नः शिवभक्तिसमन्वितः ॥ 82.
शिवभक्तैः सुराद्यैश्च देवैरपि महानुगैः ।
शिवप्रणामपरमः करोतु मम शान्तिकम् ॥ 83.
आग्नेय्यां दिविभागे तु पुरी तेजोवती शुभा ।
नानारत्नसमाकीर्णा रत्नज्वालासमुज्वला ॥ 84.
तत्र ज्वालापरीतांग दीप्तांगारसमद्युतिः ।
भूतिकृद्देहिनां देवो ज्वलनः पापनाशनः ॥ 85.
शिवपूजाजपोद्युक्तो शिवस्मरणभावितः ।
शान्तिं करोतु मे देवः तथा पापपरिक्षयम् ॥ 86.
वैवस्वती पुरी नाम दक्षिणे तु व्यवस्थिता ।
लोहप्राकारसंयुक्ता प्रासादैर्गोपुरैः शुभैः ॥ 87.
यमरूपशतानीका पितृयक्षोरगाकया ।
तत्रेन्द्रनीलसंकाशो रक्तान्ताघतलोचनः ॥ 88.
महामहिषमारूढः कृष्णस्रग्वस्त्रभूषणः ।
कालान्तकमहाकाल- चण्डकोदण्डसंयुतः ॥ 89.

6 श्रीमान्यमो महातेजाः शिवधर्मपरायणः ।
(p.119) शिवपूजाजपोद्युक्तः क्षेमारोग्यं करोतु मे ॥ 90.
नैर्ऋते तु दिशोभागे पुरी शुद्धवती शुभा ।
नानागणसमाकीर्णा नानाकिंनरसंकुला ॥ 91.
तत्र यो स्थितसंकाशः परिपिंगललोचनः ।
शुक्लवस्त्रपरीधानः पाशहस्तो महाद्युतिः ॥ 92.
वरुणः परया भक्त्या शिवैकाहितमानसः ।
रोगशोकार्तिसंतापं विनाशयतु मे सदा ॥ 93.
वायव्ये दिग्विभागे तु पुरी गन्धवती शुभा ।
ऋषिसिद्धगणाकीर्णा हेमप्राकारतोरणा ॥ 94.
तत्र धूम्रेण देहेन कृष्णपिंगललोचनः ।
पट्टं(?)ध्यात्यन्तराकीनो ध्वजयष्ट्या**युधोद्यतः ॥ 95.
पवनः परमो देवः परमेश्वरभावितः ।
क्षेमारोग्यबलं शान्तिं करोतु विजयं मम ॥ 96.
महोदया नाम पुरी उत्तरेण महोज्वला ।
अनेकयक्षसंकीर्णा नानारत्नोपशोभिता ॥ 97.
हेमप्राकारसंयुक्ता रत्नप्रासादसंयुता ।
तत्र देवो गदाहस्तः चित्रस्रा*गवस्त्रभूषणः ॥ 98.
हृस्वबाहुर्महातेजाः परिपिंगललोचनः ।
कुबेरो वरदः श्रीमान् हरपादार्चने रतः ॥ 99.

6 शान्तिं करोतु मे प्रीतः शान्तः शान्तेन चेतसा ।

(IPL 19)

यशोवती पुरी नाम (सौम्यायां) दिशि संस्थिता ॥ 100.
ऐशान्यां

नानागणसमाकीर्णा नानाकृतसुरालया ।

तेजः प्राकारपर्यन्ता दुर्निरूपगुणोज्वला ॥ 101.

तत्र मौक्तिकसंकाशः शशांककृतशेखरः ।

त्रिणेत्रः शान्तरूपात्मा अक्षमालाकरोद्यतः ॥ 102.

ईशानः परमो देवः सर्वदेवोत्तमोत्तमः ।

सोऽपि सर्वात्मभावेन शान्तिमाशु करोतु मे ॥ 103.

भूर्लोकेऽथ भुवर्लोके स्वर्लोकेऽपि च संस्थितः ।

देवो दिव्यप्रभायुक्तः शान्तिं कुर्वन्तु मे सदा ॥ 104.

(IPL 20)

महर्लोके च ये | देवाः शुद्धस्फटिकसंनिभाः ।

रुद्रभक्ता महात्मानः शिवं कुर्वन्तु मे सदा ॥ 105

Verses from 111 to to be read here. →

महर्लोके जनोलोके तपोलोके च संस्थिताः ।

ते देवा निरातंकाः शान्तिं कुर्वन्तु मे सदा ॥ 106.

सत्यलोके च ये देवा भवन्त्युज्वलविग्रहाः ।

शिवभक्ताः सुमनसः शान्तिं कुर्वन्तु मे सदा ॥ 107.

गिरिकन्दरदुर्गेषु वनेषु निवसन्ति ये ।

रुद्रार्चनरता देवाः शान्तिं कुर्वन्तु मे सदा ॥ 108.

शरच्चन्द्रांशुगौरेण देहेनामलतेजसा ।

सरस्वती शिवे भक्ता शान्तिमाशु करोतु मे ॥ 109.

(PL 20) 6. चारुचामीकरच्छाया सरोजकरपल्लवा ।
श्रीदेवी च शिवे भक्ता श्रीमद्भूतिं ददातु मे ॥ ११०.
हारेण सुविचित्रेण भास्वत्कनकमेखला ।
(तपोलोके च ये देवाः शुद्धस्फटिकसंनिभाः ॥ १११.
To be read after verse 105.} रुद्र ~~शिव~~भक्ता महात्मानः शिवं ~~शान्तिं~~ कुर्वन्तु मे सदा ।
जनोलोके च ये देवा धौतचामीकरप्रभाः ॥ ११२.
ईशानं प्रणता नित्यं शान्तिं कुर्वन्तु मे सदा ।
महर्लोके च ये देवा विमानोज्वलसंस्थिताः ॥ ११३.
शिवैकाहितचेतस्काः पापं प्रशमयन्तु मे ।)
अपराजिता शिवे भक्ता करोतु विजयं मम. ॥ ११४.
सिन्दूरारुणरक्तांगः कर्णान्तायतलोचनः ।
सहस्रकिरणः श्रीमान् सप्तसप्तिकवाहनः ॥ ११५.
गभस्तिमाली भगवान् शिवार्चनरतः सदा ।
करोतु मे महाशान्तिं ग्रहपीडां व्यपोहतु ॥ ११६.
पद्मरागनिभेनापि देहेनापिंगलोचनः ।
अंगारकः शिवे भक्तो रुद्रार्चनपरायणः ॥ ११७.
रुद्रसद्भावसंपन्नो रुद्रध्यानैकमानसः ।
ग्रहपीडाभयं सर्वं विनाशयतु मे सदा ॥ ११८.
कुंकुमच्छविभा श्रीमद् देहेन परिमण्डितः ।
बुधोऽपि शिवभक्तात्मा ग्रहपीडां व्यपोहतु ॥ ११९.

(P.20)

6. तप्तचामीकरच्छायः सर्वज्ञानकृतालयः ।
बृहस्पतिः सदाकालं ईशानार्चनतत्परः ॥ 120.
सोपि शान्तात्सभावेन परमेण सुभावितः ।
ग्रहपीडां विनिर्जित्य करोतु विजयं मम ॥ 121.
हिमकुन्देन्दु तुल्याभः सुरदैत्यैः सुपूजितः ।
शुक्रःशिवार्चनरतो ग्रहपीडां व्यपोहतु ॥ 122.
भिन्नांजनसमच्छायः संरक्तनयनद्युतिः ।
शनैश्चरः शिवे भक्तो ग्रहपीडां व्यपोहतु ॥ 123.
नीलांजनसमः श्रीमान् सैंहिकेयो महाबलः ।
शिवपूजारतो राहुः ग्रहपीडां व्यपोहतु ॥ 124.
धूम्रदेहयुतः क्रूरः सर्वोत्पातसमन्वितः ।
शिवार्चनरतः केतुः ग्रहपीडां व्यपोहतु ॥ 125.
एते ग्रहा महात्मानः शिवार्चनरताः सदा ।
शान्तिं कुर्वन्तु मे हृष्टाः सदाकालं हितैषिणः ॥ 126.
मुखे यस्याः स्थितो मृत्युः विष्टिर्नाम महाबला ।
सुमुखा विघ्नकारी च पुच्छे च विजयंकरी ॥ 127.
रुद्रप्रणामपरमा शान्तिमाशु करोतु मे ।
तृतीया सप्तमी चैव दशमी च चतुर्दशी ॥ 128.
चतुर्थी त्वष्टमी चैव एकादशी च पौर्णिमा ।
एता विघ्नकरा भक्ताः शुक्लकृष्णसमुद्भवाः ॥ 129.

(pl.20)

6. भवन्तु मे श्रियै नित्यं कुर्वन्तु विजयं सदा ।
अमावास्या महापुण्या पितृदेवसमन्विता ॥ 130.
प्रिया ह्येषा तु परमा शिवस्य परमार्थिनः ।
शिवतेजःसमायुक्ता करोतु मम शान्तिकम् ॥ 131.
प्रतिपद्वह्निसंयुक्ता द्वितीया कोऽधिदेवता ।
तृतीया च महापुण्या धनदेन समन्विता ॥ 132.
चतुर्थी च महापुण्या गजवक्त्राधिदैवतम् ।
पंचमी श्रीयुता नित्यं षष्ठी स्कन्दाधिदैवतम् ॥ 133.
सप्तमी रविसंयुक्ता ह्यष्टमी रुद्रदेवता ।
नवमी तिथिरस्युक्ता दुर्गादेऽयधिदेवता ॥ 134.
दशमी यमसंयुक्ता इन्द्रेणैकादशी मता ।
द्वादशी विष्णुसंयुक्ता मदनेन त्रयोदशी ॥ 135
चतुर्दशी मनःस्थेन पौर्णमासी हिमांशुना ।
एतास्तु तिथयः सर्वाः ईशानार्चन तत्पराः ॥ 136.
शान्तिं कुर्वन्तु मे नित्यं सदाकालं हितैषिणः ।
विष्कंभः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा ॥ 137.
वज्रसिद्धि व्यतीपाता (त्ता) वरीयान्परिघः शिवः ।
सिद्धः साध्यः शुभः शुभ्रो ब्राह्मो माहेन्द्र वैधृती ॥ 138.

(pl.21)

चन्द्रस्य भानोरुत्पन्ना ह्येते योगा महाबलाः ।
शिवभक्तियुताः सर्वे शिवभक्तिविधायिनः ॥ 139.

(p.221) 6 शान्तिं कुर्वन्तु मे नित्यं शिवध्यानपरायणाः ।
कृत्तिका परमा देवी रोहिणी रुचिरानना ॥ 140.
मृगशीर्षं शिवे भक्ता आर्द्रा च परमोज्ज्वला ।
पुनर्वसुस्तथा पुष्या आश्लेषा च महोज्ज्वला ॥ 141.
नक्षत्रामन्तरो ह्येताः प्रभामाला भासिताः ।
महादेवार्चनरता महादेवात्मभावनाः ॥ 142.
पूर्वभागे स्थिता ह्येताः शान्तिं कुर्वन्तु मे सदा ।
मघा सर्वगुणोपेता पूर्वा चैव तु फल्गुनी ॥ 143.
उत्तरा फल्गुनी श्रेष्ठा हस्तचित्रा तथोत्तरा ।
स्वाती विशाखा वरदा दक्षिणस्थानसंस्थिताः ॥ 144.
अर्चयन्तः सदाकालं देवं त्रिणयनं परम् ।
ममापि शान्तिकं ह्येताः कुर्वन्तु शिवचोदिताः ॥ 145.
अनुराधा तथा ज्येष्ठा मूला वृश्चिकान्विता ।
पूर्वाषाढा महावीर्या आषाढा चोत्तरा शुभा ॥ 146.
अभिजिन्नाम नक्षत्रं श्रवणः परमोज्ज्वलः ।
एताः पश्चिमतो दीप्ता राजन्ते चारुमूर्तयः ॥ 147.
ईशानं पूजयन्त्येतत् सर्वकालं सुभाविताः ।
शान्तिं कुर्वन्तु मे नित्यं विभूतिं च महाहिताः ॥ 148
श्रविष्ठा शतभिषक्चैव पूर्वभाद्रपदस्तथा ।
उत्तराभद्ररेवत्या ह्यश्वती सुमहर्द्धिका ॥ 149.

(P.21) 6.

चरणौ च महावीर्या नित्यमुत्तरसंस्थिताः ।
शिवार्चनरता नित्यं शिवध्यानैकमानसाः ॥150.
शान्तिं कुर्वन्तु मे नित्यं सर्वकालं शुभोदयाः ।
मेषो मृगाधिपस्थं यो धनुर्दीप्तिमतां वरः ॥151.
पूर्वे तु भासयन्त्येते शिवपूजापरायणः ।
शान्तिं कुर्वन्तु मे नित्यं हरपादाब्जपूजकाः ॥152.
वृषश्च वरदः कन्या मकरश्च महर्धिकाः ।
ऋषभश्च महावीर्याः शिवध्यानसुभाविताः ॥153.
एते दक्षिणदेशे तु पूजयन्ति सदाशिवम् ।
भक्त्या परमया नित्यं शान्तिं कुर्वन्तु मे सदा ॥154.
मिथुनश्च तुलाकुंभौ पश्चिमे तु व्यवस्थिताः ।
शिवपादार्चने युक्ताः शान्तिं कुर्वन्तु मे सदा ॥155
कर्कटो वृश्चिको मीनो येन्ना उत्तरतः स्थिताः ।
यजन्त्येते सदाकालं रुद्रं त्रिभुवन~~ेश्वरम्~~ नाधिपम् ॥156.
शान्तिं कुर्वन्तु मे नित्यं ~~शिवा~~ रुद्रा ज्ञानुविधायिनः ।
ऋषयः सप्तसंख्याता ध्रुवान्ताः परमोज्वलाः ॥157.
शिवप्रसादसंपन्नाः शान्तिं कुर्वन्तु मे सदा ।
काश्यपो ~~आर्भवो~~ गालवो गार्ग्यो विश्वामित्रमहामुनिः ॥158.
मनुर्दक्षो वसिष्ठोऽथ पुलस्त्यः पुलहः क्रतुः ।
नारदो भृगुरात्रेयो भारद्वाजोऽङ्गिरा मुनिः ॥159.

(P.21)

6. वाल्मीकिः कौशिकः कण्वः जाबाल्योऽथ पुनर्वसुः ।
शाकंकायन इत्याद्या ऋषयोऽथ महाबलाः ॥ 160.
शिवध्यानार्चने युक्ताः शान्तिं कुर्वन्तु मे सदा ।
ऋषिपत्न्यो महाभागा ऋषिकन्याः कुमारिकाः ॥ 161.
शिवार्चनरता नित्यं शान्तिं कुर्वन्तु मे सदा ।
सिद्धाः समृद्धतपसो गन्धर्वाश्चाप्सरोगणाः ॥ 162.
विद्याधरा महात्मानो गरुडश्च महर्द्धिकः
महेश्वरपरा नित्यं महेश्वरपदार्चकाः ॥ 163.
सिद्धिमाशु प्रयच्छन्तु शिवधर्मपरायणाः ।
नमुचिर्नाम दैत्येन्द्रः शंकुकर्णो महाबलः ॥ 164.
तारकोऽग्निमुखो दैत्यः कालनेमिर्बलिस्तथा ।
एते दैत्या महात्मानः शिवसद्भावभाविताः ॥ 165.
पुष्टिं बलं तथा वीर्यं प्रयच्छन्तु सुखोदयम् ।
महानादोऽथ विततः दैत्यः परमवीर्यवान् ॥ 166.
हाटकेश्वरदेवस्य नित्यं पूजापरायणः ।
बलं वीर्यं च मे क्षिप्रं प्रयच्छतु महर्द्धिकः ॥ 167.
महाजंभो हयग्रीवः प्रह्लादो दैत्यराट् प्रभुः ।

(P.22)

वैरोचनो हिरण्याक्षः सुपर्वा च सुलोमजः ॥ 168.
मुचुकुन्दः सुकुन्दश्च दैत्यो रैवतकस्तथा ।
भावेन परमेणाशु यजन्तः सर्वदा शिवम् ॥ 169

(P.22) b सततं च शिवात्मानं पुष्टिं कुर्वन्तु मे सदा ।

आरक्तेन शरीरेण रक्तान्तायतलोचनः ॥ 170

महाभोगकृताटोपः शंखाब्जकृतलाञ्छनः ।

अनन्तो नाम नागेन्द्रः शिवपूजारतः सदा ॥ 171.

महापापविषं हत्वा क्षेममारोग्यं करोतु मे ।

सुश्वेतेन तु देहेन सुश्वेतोत्पलशेखरः ॥ 172.

चारुभोगकृताटोपो हारचारुविभूषणः ।

वासुकिर्नाम नागेन्द्रः शिवपूजापरो महान् ॥ 173.

सर्वपापविषं हत्वा क्षेममारोग्यं करोतु मे ।

अतिपीतेन देहेन प्रस्फुर~~देह~~द्भोगसंपदा ॥ 174.

तेजसा चातिरूपेण कृतस्वस्तिकलाञ्छनः ।

नागराट् तक्षकः श्रीमान् नागकोटिसमन्वितः ॥ 175.

करोतु मे महाशान्तिं सर्वदोषविषापहः ।

अतिकृष्णेन देहेन स्फुरद्विकटमस्तकः ॥ 176.

कण्ठे रेखात्रयोपेतो घोरदंष्ट्रायुधोद्यतः ।

कालकूटो महानागो विषदर्पसमन्वितः ॥ 177.

~~करोतु मे महाशान्तिं~~ विषशस्त्राग्निसंतापं हत्वा शान्तिं करोतु मे ।

पद्मवर्णेन देहेन चारुपद्मायतेक्षणः ॥ 178.

पंचबिन्दुकृताभासो ग्रीवायाः शुभलक्षणः ।

ख्यातः पद्ममहानागो हरपादार्चने रतः ॥ 179.

(P.22)

6. करोतु मे महाशान्तिं महापापविपक्षयम् ।
पुण्डरीकनिभेनापि देहेनामिततेजसा ॥ 180.
शंखशूलाब्जरुचिरैः भूषितो मूर्ध्नि बिन्दुभिः ।
महापद्मो महानागो नित्यं पशुपतौ रतः ॥ 181.
विनिहृत्य विषं घोरं शान्तिमाशु करोतु मे ।
श्यामेन देहभारेण श्रीमत्कमललोचनः ॥ 182.
विषदर्पबलोन्मत्तो ग्रीवायामेकरेखया ।
शंखपालः श्रिया दीप्तः शिवपादाब्जपूजकः ॥ 183.
महाघोरविषं हत्वा करोतु मम शान्तिकम् ।
अतिगौरेण देहेन चन्द्रार्धकृतमस्तकः ॥ 184.
दीप्तभोगकृताटोपः शुभलक्षणलक्षितः ।
गुळिको नागराजेन्द्रो नित्यं हरपरायणः ॥ 185.
अपहृत्य विषं घोरं करोतु मम शान्तिकम् ॥
अन्तरिक्षे च ये नागा ये नागाः स्वर्गसंस्थिताः ॥ 186.
गिरिकन्दरदुर्गेषु ये नागा भूमिसंस्थिताः ।
पाताले ये स्थिता नागाः सर्वेऽप्येत्र समाहिताः ॥ 187.
रुद्रपादार्चने युक्ताः शान्तिं कुर्वन्तु मे सदा ।
नागिन्यो नागकन्याश्च तथा नागकुमारिकाः ॥ 188.
शिवभक्ताः सुमनसः शान्तिं कुर्वन्तु मे सदा ।
य इदं नागसंस्थानं कीर्तयेच्छृणुयादपि ॥ 189.

(P.L22) 6. न तस्य नागा हिंसन्ति विषं नाक्रमते सदा ।
चिन्तितं सिध्यते नित्यं तथा पापपरिक्षयः ॥ 190.
सिद्धिमाशु प्रयच्छन्ति सर्वविघ्नविवर्जिताः ।
गंगा पुण्या महादेवी यमुना नर्मदा तथा ॥ 191.
गोमती चापि कावेरी कौशिका च सरस्वती ।
ताम्रपर्णी च सरयूः वरुणा देविका तथा ॥ 192.
सर्वभूतपतिं देवं परमेशं महेश्वरम् ।
पूजयन्त्यो महानद्यः शिवसद्भावभाविताः ॥ 193.
शान्तिं कुर्वन्तु मे नित्यं तथा पापपरिक्षयम् ।
सिद्धिमाशु प्रयच्छन्तु सर्वविघ्नविनाशनम् ॥ 194.
चन्द्रभागा महापुण्या नदी गोदावरी शुभा ।
सरयूर्गण्डकी श्रेष्ठा कौशिकी च सरस्वती ॥ 195
(P.L23) एता नद्यो महापुण्याः शिवपादार्चने रताः ।
शान्तिं कुर्वन्तु मे नित्यं शिवध्यानैकमानसाः ॥ 196
नैरंजना नाम नदी शोणश्चापि महानदः ।
मन्दाकिनी च परमा तथा संनिहिता शुभा ॥ 197
एताश्चान्याश्च बह्वोप- भूमिदिव्यन्तरिक्षगाः ।
रुद्रार्चनपरा नित्यः कुर्वन्तु मम शान्तिकम् ॥ 198.
गुह्यानि यानि ~~दिव्यानि~~ तीर्थानि आसमुद्रात्सरांसि च ।
कुर्वन्तु शान्तिकं तानि श्रीकण्ठाधिष्ठितानि तु ॥ 199.

(P. 23)

6 महान्वैश्रवणो देवः यक्षराजो महर्धिकः ॥
यक्षकोटिपरीवारो यक्षासंख्येयसंयुतः ॥ २००.
महाविभवसंपन्नो हरपादार्चने रतः ।
शान्तिं करोतु मे प्रीतः पद्मपत्रायतेक्षणः ॥ २०१.
माणिभद्रो महायक्षो मणिरत्नविभूषितः ।
मनोहरेण हारेण कण्ठलग्नेन राजते ॥ २०२.
शिवध्यानरतो नित्यं शिवपादाब्जपूजकः ।
शान्तिं करोतु मे नित्यं सर्वदोषनिवारणम् ॥ २०३.
यक्षिणीयक्षकन्याभिः परिवारितविग्रहः ।
रुद्रार्चनपरो भक्तः करोतु मम शान्तिकम् ॥ २०४.
सुवीरो नाम यक्षेन्द्रो मणिकुण्डलभूषणः ।
ललाटे हेमपट्टेन शोभनेन विराजितः ॥ २०५.
बहुयक्षसमाकीर्णो यक्षैर्नमितविग्रहः ।
शिवः परापरो नित्यं करोतु मम शान्तिकम् ॥ २०६.
वंचिको नाम यक्षेन्द्रः कर्णिकाकटकोज्ज्वलः ।
मकुटेन विचित्रेण केयूराभ्यां विराजितः ॥ २०७.
यक्षासंख्येयसंयुक्तो यक्षकोटिसमन्वितः ।
हरार्चनरतो नित्यं करोतु मम शान्तिकम् ॥ २०८.
श्रीमान्विभण्डको यक्षो नानारत्नविभूषितः ।
चारुणा कुण्डलेन्द्रेण कर्णे नित्यं विराजितः ॥ २०९.

(P. 23)

6. यक्षो यक्षपतिर्देवो यक्षसेनापतिर्बुधः । 
हरपादार्चनरतः करोतु मम शान्तिकम् ॥ 210.
धृतराष्ट्रो महातेजाः यक्षो यक्षाधिपः प्रभुः ।
दिव्यपट्टांशुकच्छन्नो मणिकांचनभूषितः ॥ 211
शिवभक्तः शिवध्याता शिवपूजापरायणः ।
शिवप्रसादसंपन्नः करोतु मम शान्तिकम् ॥ 212.
पूर्णभद्रो महायक्षः सर्वालंकारभूषितः ।
रत्नदीप्तेन पट्टेन हैमेनातीव राजिते ॥ 213.
यक्षकोटिसहस्रेण परिवारितविग्रहः ।
संयतो रुद्रप्रणतो रुद्रभक्तः पुनः पुनः ॥ 214
रुद्रार्चनसमुद्युक्तः करोतु मम शान्तिकम् ।
विरूपाक्षश्च यक्षेन्द्रः श्वेतवासा महाद्युतिः ॥ 215
चारुकांचनमालाभिः किंकिणीरवकान्वितैः ।
विभूषितस्सदाकाकं वरदानैकतत्परः ॥ 216.
रुद्रपूजापरो नित्यं करोतु मम शान्तिकम् ।
अन्तरिक्षगता यक्षा ये यक्षाः स्वर्गसंस्थिताः ॥ 217.
गिरिकन्दरदुर्गेषु यक्षाः पातालवासिनः ।
नानारूपयुता यक्षाः शिवभक्ता दृढव्रताः ॥ 218.
योगैश्वर्ययुताः सर्वे शिवपूजासमुत्सुकाः ।
शान्तिं कुर्वन्तु मे नित्यं शान्ताः शान्तेन चेतसा ॥ 219.

(Pl 23) b यक्षिण्यो विविधाकाराः तथा यक्षकुमारिकाः ।
यक्षकन्या महाभागाः शिवार्चनपरायणाः ॥ 220.
शान्तिं स्वस्त्ययनं क्षेमं बलं कल्याणमुत्तमम् ।
सिद्धिमाशु प्रयच्छन्तु नित्यमेव समाहिताः ॥ 221.
पर्वताः सर्वतः सर्वे पर्वत्यश्च महर्धिकाः ।
शिवभक्ताः सदाकालं क्षेमं कुर्वन्तु मे सदा ॥ 222.
समुद्राः सर्वतः सर्वे ये चान्ये सागरा भुवि ।
रुद्रार्चनपरा नित्यं कुर्वन्तु मम शान्तिकम् ॥ 223.
राक्षसाः सर्वतः सर्वे राक्षसा घोररूपिणः ।
राक्षसा ये महावीर्या राक्षसाश्च महाबलाः ॥ 224.
स्वर्गलोकस्था नागयक्षा ये तु येन्तरिक्षे तु राक्षसाः ।
पाताले राक्षसा ये तु नित्यं रुद्रार्चने रताः ॥ 225.
(Pl 24) |शान्तिं कुर्वन्तु मे नित्यं सततं शिवभाविताः ।
भैरवं यस्य रूपं तु प्रेतभस्मावगुण्ठितम् ॥ 226
तेजसा तस्य देवस्य शान्तिं कुर्वन्तु मे सदा ।
नित्यमुज्वलवेषेण योगिन्योऽथ महाबलाः ॥ 227.
अनेकरूपधारिण्य डाकिन्यश्च महर्धिकाः ।
रुद्रप्रणामपरमा रुद्रपूजारताः सदा ॥ 228.
रुद्रैकाहितचेतस्काः शान्तिं कुर्वन्तु मे सदा ।
अन्तरिक्षगता याश्च डाकिन्यः स्वर्गसंस्थिताः 229.

(PL 24)

6. पाताळे भूतले याश्च गिरिदुर्गेषु याः स्थिताः ।
तृतीयं लोचनं यस्य त्रिशूलं भस्म भासुरम् ॥ 230
तेजसा तस्य दे ~~तस्य~~ वस्य शान्तिं कुर्वन्तु मे सदा ।
ये पिशाचा महावीर्याः ये पिशाचा महर्धिकाः ॥ 231.
ये पिशाचा महात्मानः पिशाचाः कामरूपिणः ।
अन्तरिक्षे पिशाचा ये स्वर्गे ये च पिशाचकाः ॥ 232.
भूतले ये पिशाचाश्च पाताळतलवासिनः ।
नानारूपधराः सर्वे सर्वे च गुणवत्तराः ॥ 233.
चन्द्रार्धं मस्तके यस्य भस्म यस्य विभूषणम् ।
तेजसा तस्य देवस्य शान्तिं कुर्वन्तु मे सदा ॥ 234.
सर्वे भूता महारूपाः सर्वे भूता महोज्वलाः ।
अन्तरिक्षे च ये भूता ये भूता दिवि संस्थिताः ॥ 235.
पाताळे भूतले ये तु भूता भूतिविधायिनः ।
खट्वांगं यस्य विमलं त्रिशूलं करपल्लवे ॥ 236.
तेजसा तस्य देवस्य शान्तिं कुर्वन्तु मे सदा ।
प्रेताः प्रेतगणाः सर्वे ये प्रेताः सर्वतो मुखाः ॥ 237.
अतिदीप्ताश्च ये प्रेता ये प्रेता रुधिराशनाः ।
अन्तरिक्षे तु ये प्रेता ये प्रेताः स्वर्गवासिनः ॥ 238.
पाताळे भूतले प्रेता ये प्रेताः कामरूपिणः ।
श्मशान निलयो यस्य वृषभो यस्य वाहनम् ॥ 239.

(PL24)

b. तेजसा तस्य देवस्य शान्तिं कुर्वन्तु मे सदा ।
अपस्मारा ग्रहाः सर्वे सर्वे चापि ज्वरग्रहाः ॥ 240.
गर्भबालकग्रहा ये तु नानारोगग्रहाश्च ये ।
अन्तरिक्षे ग्रहा ये तु ये च स्वर्गे ग्रहोत्तमाः ॥ 241.
भूपाताळे ग्रहा ये च ये ग्रहाः सर्वतो दिशि ।
कण्ठे यस्य महानील- भूषणं यस्य पन्नगाः ॥ 242.
तेजसा तस्य देवस्य शान्तिं कुर्वन्तु मे सदा ।.
इति देवादयः सर्वे शिवध्यानविधायिनः ॥ 243.
कुर्वन्तु शान्तिं जगतः शिवभक्तेषु सर्वदा ।
इत्युक्त्वा देवदेवस्य संनिधौ च कृताञ्जलिः ॥ 244
शिवध्यानपरो भूत्वा भक्त्या स्तोत्रमुदैरयत ।.
जयात्मयोगसंस्थाय जयसंशुद्धचेतसे ॥ 245
जयदानैकशूराय जयेशाय नमोऽस्तु ते ।
जयोत्तमाय देवाय जय कल्याणदायिने ॥ 246.
जयप्रकटदेवाय जयजय्याय ते नमः ।
जयलक्ष्मीविधानाय जयकान्तिविधायिने ॥ 247
जयवाक्यविशुद्धाय अजिताय नमो नमः ।
जय त्रिशूलहस्ताय जय खट्वांगधारिणे ॥ 248.
जयनिर्मितलोकाय जयरूपाय ते नमः ।
जय कान्तार्धदेहाय जय चन्द्रार्धधारिणे ॥ 249.

(P. 24) 6. जय देवादिदेवाय महादेवाय ते नमः ।
जय त्रिभुवनेशाय जय विख्यातकीर्तये ॥ 250.
जयाधाराय देवाय जय कर्त्रे नमोऽस्तु ते ।
जय निर्मलदेहाय जय सर्वार्थकारिणे ॥ 251.
जय मन्मथनाशाय ईशानाय नमो नमः ।
ब्रह्मविष्णिवन्द्ररूपाय जय शान्ताय ते नमः ॥ 252.
जय जात विशुद्धाय सर्वव्यापि नमोऽस्तु ते ।
इत्येतच्छान्तिकाध्यायं यः पठेच्छृणुयादपि ॥ 253.
विधूय सर्वपापानि शिवलोके महीयते ।
कन्यार्थी लभते कन्यां जयकामो जयं लभेत् ॥ 254
अर्थकामो लभेदर्थं पुत्रकामो बहून्सुतान् ।
(P. 25) विद्यार्थी लभते विद्यां योगार्थी योगमाप्नुयात् ॥ 255.
गर्भिणी लभते पुत्रं कन्या विन्दति सत्पतिम् ।
यान्यान्कामयते कामा- न्मानवः श्रवणादिह ॥ 256.
तान्सर्वान्शीघ्रमाप्नोति देवानां च प्रियो भवेत् ।
श्रुत्वाध्यायमिदं पुण्यं संग्रामं प्रविशेन्नृपः ॥ 257.
विनिर्जित्याशु ताञ्शत्रून् कल्याणैः परिपूर्यते ।
अक्षयं मोदते कालं अतिरस्कृतशासनः ॥ 258.
व्याधिभिर्नाभिभूयेत पुत्रपौत्रैः प्रतिष्ठितः ।
पठ्यमानमिदं पुण्यं यमुद्दिश्य पठेन्नरः ॥ 259.

(P.25) 6.

तस्य रोगा न बाधन्ते वातपित्तादिसंभवाः ।
नाकाले मरणं तस्य न सर्पैश्चापि दंश्यते ॥ 260.
न विषं क्रमते देहे न जडान्धत्वमूकता ।
नहि सर्पभयं तस्य नचोत्पातभयं तथा ॥ 261.
नाभिचारकृतैर्दोषैः क्लिश्यते स कदाचन ।
यत्पुण्यं सर्वतीर्थानां गंगादीनां विशेषतः ॥ 262.
तत्पुण्यं कोटिगुणितं प्राप्नोति श्रवणादिह ।
दशानां राजसूयानां अग्निष्टोमशतस्य च ॥ 263.
श्रवणात्फलमाप्नोति कोटिकोटिगुणोत्तरम् ।
अवध्यः सर्वदेवानां अन्येषां च विशेषतः ॥ 264.
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ।
गोघ्नश्चैव कृतघ्नश्च ब्रह्महा गुरुतल्पगः ॥ 265.
शरणागतघाती च मित्रविश्रम्भघातकः ।
दुष्टः पापसमाचारः पितृहा मातृहा तथा ॥ 266.
श्रवणादस्य भावेन मुच्यते सर्वपातकैः ।
शान्त्यध्यायमिदं पुण्यं न देयं यस्य कस्यचित् ॥ 267.
शिवभक्ते सदा देयं शिवेन कथितं पुरा ।
नित्यं स्वचितचित्तः स्याच्छक्तिव्याघातवर्जितः ॥ 268.
सर्वकामसमृद्धस्तु यः पठेत दिने दिने ।

इति शान्त्यध्यायः षष्ठः ॥.

(p.25) 7 नन्दिकेश्वरः ॥

ये स्मरन्ति सदाकालं ईशानं पूजयन्ति च ।
रुद्रलोकपरिभ्रष्टा विज्ञेयास्ते गणेश्वराः ॥ 1.
अग्निहोत्राश्च वेदाश्च यज्ञाश्च बहुदक्षिणाः ।
शिवलिंगार्चनस्यैते कोट्यंशेनापि नो समाः ॥ 2.
सदा यजति यज्ञेन सदा दानं प्रयच्छति ।
सदा स वायुभक्षः स्याद्यस्सदार्चयते शिवम् ॥ 3.
यः शिवं पूजयेन्नित्यं प्रणयेद्वापि भक्तितः ।
तस्य योगं च मोक्षं च शिवः प्रीतः प्रयच्छति ॥ 4.
यः कुर्यादर्चनं मासं एकाहारो जितेन्द्रियः ।
स च यत्फलमाप्नोति न तत्सर्वैर्महामखैः ॥ 5.
पौर्णमास्याममावास्यां चतुर्दश्यष्टमीषु च ।
स्नापयित्वांभसा लिंगं सर्वयज्ञफलं लभेत ॥ 6.
कृष्णपक्षे त्रयोदश्यां उपोष्य परमेश्वरे ।
प्रातर्मध्याह्नपूजां च चतुर्दश्यां समारभेत ॥ 7
पंचगव्यं सकृत्पीत्वा हविर्भुंजीत वाग्यतः ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ 8.
उपोष्य कृष्णाष्टम्यां च योऽर्चयित्वा तु शंकरम् ।
प्राप्नोति परं स्थानं यत्र देवो महेश्वरः ॥ 9.

(PL25)

7. ब्रह्मचारी शुचिर्भूत्वा त्रिसंध्यं योऽर्चयेच्छिवम् ।
त्रिसप्तकुलमुद्धृत्य शिवलोके महीयते ॥ 10.
दानोपवासनियमैः पूजाजागरभोजनैः ।
महास्नानादिविधिना शिवं पर्वसु पूजयेत् ॥ 11.
यावन्ति सर्वकालेषु यावदर्च्यते शिवम् ।
तावत्कालार्चनात्पुण्यं यत्नात्पर्वार्चनं लभेत् ॥ 12.
तस्मात्पर्वसु यत्नेन यथा विभव विस्तरैः ।
पूजनीयः शिवो नित्यं महापुण्यजिघृक्षया ॥ 13.
नैरन्तर्येण षण्मासं विधिना पूज्य शंकरम् ।
पुण्यं तदेव सकलं लभते विषुवार्चनात् ॥ 14.
एवमेव फलं ज्ञेयं महणायनयोरपि ।

(PL26)

संक्रान्तौ च दिनच्छिद्रे षडशीतिमुखेषु च ॥ 15.
मासैश्चतुर्भिर्यत्पुण्यं विधिना पूज्य शंकरम् ।
तत्कार्तिक्यां भवेत्पुण्यं पौर्णमास्यां शिवार्चनात् ॥ 16.
पुण्यं तदेव फल्गुन्यां आषाढ्यां च तथैव च ।
चातुर्मास्यार्चनादेतन् महापुण्यफलप्रदम् ॥ 17.
माघमासे समुद्युक्तः त्रिसंध्यं योऽर्चयेच्छिवम् ।
लभेत् षाण्मासिकं पुण्यं मासेनैव न संशयः ॥ 18.
यथा माघे तथाषाढे मासे चैव तु कार्तिके ।
त्रिषु पुण्यं समुज्ज्ञेयं मासेष्वेतेषु यत्कृतम् ॥ 19.

(P.L.20) 7. चातुर्मास्यकृतं पुण्यं पुष्पमासार्चनाल्लभेत् ।
चैत्रफल्गुनयोः पुण्यं द्विमासजनितं भवेत् ॥ 20.
चतुर्दश्याममावास्यां पौर्णमास्यां च पाक्षिकम् ।
पुण्यमष्टगुणं ज्ञेयं अष्टम्यां योऽर्चयेच्छिवम् ॥ 21.
यः प्रदद्याद्गवां लक्षां दोग्ध्रीणां वेदपारगे ।
एकाहमर्चयेल्लिंगं तस्य पुण्यं ततोऽधिकम् 22.
मासे मासे तु योऽश्नीयात् यावज्जीवं सकृन्नरः ।
यश्चार्चयेत्सकृल्लिंगं सममेतन्न संशयः ॥ 23.
एतेन क्रमयोगेन फलवृद्धिर्दिने दिने ।
ज्ञेया संवत्सरस्यापि यावद्वा कालमर्चयेत् ॥ 24
यः पुनः संगमुत्सृज्य शिवमब्दं प्रपूजयेत् ।
नैरन्तर्याच्छतगुणं तस्य पुण्यं विवर्धते ॥ 25.
पंचाशद्गुणितं पुण्यं अब्दार्धं योऽर्चयेच्छिवम् ।
ऋतावृतौ तदर्धं स्यात् मासे मासे तदर्धकम् ॥ 26.
मासार्धमपि यो लिंगं नैरन्तर्येण पूजयेत् ।
पुरुषोत्तमः स विज्ञेयः नैरन्तर्यं हि दुष्करम् ॥ 27.
प्रातरुत्थाय यो लिंगं भक्त्या पूजयते सकृत् ।
कपिलानां शतं दत्वा यत्पुण्यं तदवाप्नुयात् ॥ 28.
मध्यं दिनगते सूर्ये शिवं यः प्रतिपूजयेत् ।
संपूर्णां पृथिवीं दत्वा यत्फलं तदवाप्नुयात् ॥ 29.

(PL 26)

7. वारुणीमाश्रिते सूर्ये यः शिवं सम्यगर्चयेत् ।
गवां शतसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ 30.
यो लिंगमर्धरात्रे तु शुचिर्भूत्वा प्रपूजयेत् ।
सम्यगिष्टं शतं तेन यज्ञानां धर्मतो भवेत् ॥ 31.
एवं सर्वासु वेलासु अवेलास्वपि शंकरम् ।
संपूजयेन्नरो भक्त्या सर्वान्कामानवाप्नुयात् ॥ 32.
शिवलिंगं महापुण्यं सर्वदेवनमस्कृतम् ।
यः स्पृशेदपि पाणिभ्यां न स पापैः प्रलिप्यते ॥ 33.
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
ईश्वरं वैद्यमासाद्य नश्यते दुष्टरोगवत् ॥ 34.
न ते भूयः प्रयास्यन्ति योनिमार्गं सुसंकटम् ।
कांचनं मेरुमात्रं च सर्वान्दत्वा वसुन्धराम् ॥ 35.
क्रमान्मोक्षं गमिष्यन्ति ये नरा लिंगमाश्रिताः ।
शिवार्चनरतो नित्यं महापातकसंभवैः ॥ 36.
दोषैः कृतैर्न लिप्येत पद्मपत्रमिवांभसा ।
छित्वा हित्वा च भूतानि हत्वा सर्वमिदं जगत् ॥ 37.
यजेदेकं विरूपाक्षं न स पापैः प्रलिप्यते ।
सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः ॥ 38.
शिवनिष्ठा नरः सोऽपि प्रयाति परमं पदम् ।
सरित्समुद्रतीरेषु वनेषूपवनेषु च ॥ 39.

(Pl. 26) 7. गिरिशृंगेषु तुंगेषु गह्वरोपवनेषु च ।
पुष्करिण्यां तटाकेषु तीर्थायतसंश्रये ॥ 40.
यत्र वा रमते बुद्धिः तत्रैव शिवमर्चयेत् ।
सर्वयज्ञेषु यत्पुण्यं तल्लभेन्नात्र संशयः ॥ 41.
यः पुनः स्थानसंकल्प्यं उत्सृज्य शिवमर्चयेत् ।
(Pl. 27) सोऽश्वमेधफलं सर्वं लभते नात्र संशयः ॥ 42.
यस्तु सर्वत्र संपूज्य सविशेषं सविस्तरम् ।
अश्वमेधायुतं पुण्यं लभते नात्र संशयः ॥ 43.
यस्त्वमर्चयते भक्त्या तस्य पुण्यं ततोऽधिकम्
अर्थं विनैव ~~पुष्पेण~~ मंत्रेण पुण्यराशिः प्रकीर्तितः ॥ 44.
स्यादयं मन्त्रसंयुक्तं पुण्यं शतगुणाधिकम् ।
तस्मान्मंत्रेण शर्वाय स्नानगन्धफलाधिकम् ॥ 45.
क्षितिं गाश्चैव रत्नानि हेमाद्यं च निवेदयेत् ।
ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥ 46.
सर्वमात्राधिकश्चायं ओंकाराद्यः षडक्षरः ।
शिवेनान्तर्बहिर्व्याप्तं सर्वमेतच्चराचरम् ॥ 47.
जगदोमिति यद्भूते तस्मादोमिति संस्मृतम् ।
अयमर्थेन तिसृभिः मात्राभिः परिगीयते ॥ 48.
ब्रह्मा हरिश्च रुद्रश्च मात्रास्तिस्रः प्रकीर्तिताः ।
दक्षिणांगे भवो ब्रह्मा हरिर्वामांगसंभवः ॥ 49.

(p.27)

7. हृदयान्नीलरुद्रश्च ब्रह्मविष्णुप्रबोधकः ।
जगत्सृष्टिकरो ब्रह्मा विष्णुर्लोकविमोहकः ॥ ५०.
अनुग्रहपरो नित्यं नीलरुद्रः शिवात्मकः ।
त्रिभिरेतैर्जगद्व्याप्तं कारणैरात्ममूर्तिभिः ॥ ५१.
तिस्रो मात्राः शिवस्यैताः सर्वलोकप्रपूजिताः ।
एता एव त्रयो वेदाः त्रयो लोकास्त्रयोऽग्नयः ॥ ५२.
त्रयो गुणास्त्रिवर्गश्च यच्चान्यज्जगति स्थितम्
अर्धमात्रापरो रुद्रः शिवः परमकारणम् ॥ ५३.
तस्मादेतत्समुत्पन्नं जगतः कारणत्रयम् ।
सर्वयज्ञात्परः शुद्धो नमस्कारो महामखः ॥ ५४.
नमस्कारात्मयज्ञेन तस्मात्संपूजयेच्छिवम् ।
अज्ञानमशिवत्वं स्यात् सर्वदुःखाकरं यतः ॥ ५५.
सुभावात्तदवाप्तं हि यस्माद्रुद्रः परः शिवः ।
नमः शिवाय शान्ताय कारणत्रयहेतवे ॥ ५६.
निवेदये समात्मानं उक्त्वैवं परमेश्वरे ।
उक्त्वों नमः शिवायेति मुच्यते सर्वबन्धनात् ॥ ५७.
यस्मात्तस्मात्सदा मंत्रं ओंकाराद्यमनुस्मरेत् ।
सर्वदा सर्वकार्येषु क्षान्तिं निष्ठीवनादिषु ॥ ५८.
ध्यात्वा नमः शिवायेति गिरमुक्त्वा शिवं पदम् ।
यः स्वपन् प्रतिबुद्धश्च प्राणान्ते तु समुत्स्मरेत् ॥ ५९.

(P. 27)

7\. तदा नमः शिवायेति स गच्छेत्परमां गतिम् ।
शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये ॥ 60.
संसारस्थूलबन्धानां उद्वेष्टनकरो भवेत् ।
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ 61.
यः स्मरेद्देवमीशानं स बाह्याभ्यन्तरः शुचिः ।
स्मरणादेव रुद्रस्य पापसंघातपंजरम् ॥ 62.
शतधा भेदमायाति गिरिर्वज्रहतो यथा ।
सर्वेषां शिवभक्तानां अशेषार्थप्रसिद्धये ॥ 63.
मंत्रमाह शिवः साक्षात् अशेषार्थनिबन्धनम् ।
सद्बीजं सर्वविद्यानां आद्यं ब्रह्म परात्परम् ॥ 64.
सर्वार्थसाधकं मंत्रं शिवसूत्रं षडक्षरम् ।
भाष्यमस्यैव रुद्रस्य सर्वज्ञानानि शंभुना ॥ 65.
पश्चात्परापराणीह व्यक्तार्थं गदितानि तु ।
तस्मादनेन मंत्रेण प्रकुर्वीत शिवार्चनम् ॥ 66.
संध्यायां च जपेदेनं सर्वपापविशुद्धये ।
गृहाच्छतगुणं पुण्यं संध्यायां च शिवालये ॥ 67
शिवदक्षिणमूर्तौ तु तत्पुण्यमयुताधिकम् ।
तस्माच्छिवालये जप्यं आचरेच्छान्तमानसः ॥ 68.
शिवमंत्रेण सततं सर्वकामप्रसिद्धये ।
जितेन्द्रियः शान्तमनाः शिवमंत्रेण पूजयेत् ॥ 69.

(P.27)

7\. न तस्य शक्यते वक्तुं पुण्यं वर्षशतैरपि ।
एतावच्छक्यते वक्तुं यस्मिन्देशे वसेदयम् ॥ 70.
सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः ।.

(P.28)

|यस्यायमन्नमश्नाति एतस्य परिचारकाः ॥ 71
तेऽपीह तत्समा ज्ञेयाः तैर्विना न शिवार्चनम् ।.
तत्र देशे न दुर्भिक्षं न च मारी प्रवर्तते ॥ 72.
नाकाले म्रियते राजा पूज्यते यत्र शंकरः ।
दीक्षितो ~~क्षत्र~~ तस्सूत्र मन्त्रज्ञो योऽर्चयेत सदा शिवम् ॥ 73.
स यत्फलमवाप्नोति तदेकाग्रमनाः शृणु ।.
सर्ववेदेषु यत्प्रोक्तं सर्वयज्ञेषु यत्फलम् ॥ 74.
तत्फलं कोटिगुणितं स लभेन्नात्र संशयः ।.
यः शिवं पूजयेन्नित्यं अन्त्यजोऽथ जितेन्द्रियम् 75.
भवभावसमायुक्तः सोऽपि गच्छेत्परां गतिम् ।
नोपनीतसहस्रेभ्यो ब्रह्मचारी विशिष्यते ॥ 76.
ब्रह्मचारि सहस्रेभ्यो गृहस्थो हि विशिष्यते ।.
गृहसंस्थ सहस्रेभ्यो ह्यग्निहोत्री विशिष्यते ॥ 77
अग्निहोत्रिसहस्रेभ्यः सत्रयाजी विशिष्यते ।.
सत्रयाजिसहस्रेभ्यः सर्वविद्यार्थपारगः ॥ 78.
सर्वविद्यार्थवित्कोट्याः शिवभक्तो विशिष्यते ।.
तस्माद्देवं शिवं भक्त्या पूजयेच्छान्तमानसः ॥ 79.

(P.28) I.

शिवभक्तो जितक्रोधः शिवज्ञानपरायणः ।
मैत्रीकारुणिकोपेतः प्राप्नोति परमं पदम् ॥ 80.
क्षणार्धेनापि यत्पुण्यं कुर्यान्मैत्री सुभावितः ।
न तद्वर्षशतेनापि तपोयज्ञशतैरपि ॥ 81.
सर्वप्राणिषु कारुण्यं दीनानाथेषु ~~कार~~ भावयेत् ।
सुखप्राणिषु मैत्री स्यान्मुदिताः पुण्यशीलिषु ॥ 82.
अपुण्यवत्सु चोपेक्षां सर्वेषां च वदेच्छिवम् ।
इत्येवं पंचधा चित्तं भावयित्वा यजेच्छिवम् ॥ 83.
संपूज्य पशुभर्तारं प्रहृष्टेनान्तरात्मना ॥
ध्यानं कुर्याद्यथोद्दिष्टं सर्वपापनिकृन्तनम् ॥ 84.
दृष्ट्वा तु परया भक्त्या भगवन्तं महेश्वरम् ।
(कृतांजलिपुटो भूत्वा भगवन्तं महेश्वरम्) ॥ 85.
कृतांजलिपुटो भूत्वा स्तोत्रमेतदुदीरयेत् ।
स्तुताय स्तुतिरूपाय स्तूयमानाय सर्वदा ॥ 86.
स्तुतिहेतुनिधानाय नमस्त्रिणयनाय ते ।
देवाय देवदेवाय सर्वदेवैकहेतवे ॥ 87.
देवानामपि देवाय नमो देवतमाय ते ।
नमस्ते ज्ञानरूपाय ज्ञानाज्ञानैकहेतवे ॥ 88.
ज्ञानविज्ञान~~रूपा~~रूढाय नित्यं ज्ञानतमाय ते ।
सूक्ष्माय सूक्ष्मरूपाय सूक्ष्मज्ञानैकहेतवे ॥ 89.

(PL28)

| | | |
|---|---|---|
| 1. सूक्ष्माणामपि सूक्ष्माय | नमः सूक्ष्मतमाय ते | । |
| दिव्याय दिव्यरूपाय | परमार्थैकहेतवे | ॥ ९०. |
| परापरविमुक्ताय | नमः परतमाय ते | । |
| पूज्याय पूज्यरूपाय | सर्वपूज्यैकहेतवे | ॥ ९१. |
| पूज्यानामपि पूज्याय | नमः पूज्यतमाय ते | ।. |
| नित्याय नित्यरूपाय | सर्वनित्यैकहेतवे | ॥ ९२. |
| दीप्तानामपि दीप्ताय | सर्वनित्यैकहेतवे | ।. |
| नित्यानापि नित्याय | नमो नित्यतमाय ते | ॥ ९३. |
| दीप्ताय दीप्तरूपाय | सर्वदीप्त्यैकहेतवे | ।. |
| दीप्तानामपि दीप्ताय | नमो दीप्ततमाय ते | ॥ ९४. |
| साराय सारसाराय | सर्वसारैकहेतवे | ।. |
| साराणामपि साराय | नमः सारतमाय ते | ॥ ९५. |
| शक्ताय शक्तिरूपाय | सर्वशक्त्यैकहेतवे | ।. |
| शक्तानामपि शक्ताय | नमः शक्ततमाय ते | ॥ ९६. |
| शुद्धाय शुद्धरूपाय | सर्वशुद्ध्यैकहेतवे | ।. |
| शुद्धानामपि शुद्धाय | नमः शुद्धतमाय ते | ॥ ९७. |
| सर्वमंत्रशरीराय | सर्वमंत्रैकहेतवे | ।. |
| मंत्राणामपि मंत्राय | नमो मंत्रतमाय ते | ॥ ९८. |
| ऽघोरप्रमाणरूपाय | ईशानाय नमो नमः | ।. |
| ऽघोरप्रमाणरूपाय | पुरुषाय नमो नमः | ॥ ९९. |

PL29.

(P. 29)

7. ॰व्योमप्रमाणाकाराय — अघोराय नमो नमः ।
॰व्योमप्रमाणरूपाय — ॰व्योमेशाय नमो नमः ॥ 100.
॰व्योमप्रमाण स(द्याय — सद्येशाय नमो नमः) ।
॰व्योमप्रमाण विद्याय — विद्येशाय नमो नमः ॥ 101.
॰व्योमप्रमाण मोक्षाय — मोक्षेशाय नमो नमः ।
॰व्योमप्रमाण विश्वाय — विश्वेशाय नमो नमः ॥ 102.
॰व्योमप्रमाण देहाय — बहुदेहाय ते नमः ।
देहासंख्येययुक्ताय — विश्वेशाय नमो नमः ॥ 103.
एककालद्विकालाय — बहुकालाय ते नमः ।
कालासंख्येय युक्ताय — (कालकालाय ते नमः) ॥ 104.
(एकजिह्वद्विजिह्वाय) — बहुजिह्वाय ते नमः ।
जिह्वाय जिह्वासंस्थाय — त्रिणेत्राय नमो नमः ॥ 105.
एककर्णद्विकर्णाय — बहुकर्णाय ते नमः ।
कर्णासंख्येययुक्ताय — शंकराय नमो नमः ॥ 106.
एकनासद्विनासाय — बहुनासाय ते नमः ।
नासासंख्येययुक्ताय — (महेशाय नमो नमः) ॥ 107.
(एकदंष्ट्रद्विदंष्ट्राय) — बहुदंष्ट्राय ते नमः ।
दंष्ट्रासंख्येययुक्ताय — महेशाय नमो नमः ॥ 108.
एकनेत्रद्विनेत्राय — बहुनेत्राय ते नमः ।
नेत्रासंख्येययुक्ताय — ईशा(नाय नमो नमः ॥ 109.

(P. 29)

7. एकवक्त्रद्विवक्त्राय बहुवक्त्राय ते नमः ।
वक्त्रासंख्येययुक्ताय परमेशाय ते नमः ॥ 110.
एकहस्तद्विहस्ताय बहुहस्ताय ते नमः ।
हस्तासंख्येययुक्ताय शंकराय नमो नमः ॥ 111.
(एकशास्त्रद्विशास्त्राय बहुशास्त्राय ते नमः) ॥
शास्त्रासंख्येययुक्ताय ईशानाय नमो नमः ॥ 112.
एकपादद्विपादाय बहुपादाय ते नमः ।
पादासंख्येययुक्ताय महादेव नमोऽस्तु ते ॥ 113.
. . . . . . ~~महा~~ सो - - . .
नमस्तेऽस्तु महायोगिन् ~~नमोऽ~~ नमस्तेऽस्तु महाबल ! ~~॥॥~~
नमस्तेऽस्तु महेशान ! नमस्तेऽस्तु महोत्तम ! ॥ 114.
नमस्तेऽस्तु महारूप ! नमस्तेऽस्तु सदाशिव ! ।
नमस्तेऽस्तु सदाशुद्ध ! - - - - ॥ 115.
- - - - - नमस्तेऽस्तु सदाभव ! ।
नमस्ते भगवञ्छान्त ! नमस्ते भगवन्ध्रुव ! ॥ 116.
नमस्ते भगवन्दीप्त ! नमस्ते भगवन्हर ! ।
अजिताय नमस्तुभ्यं असंगाय नमो नमः ॥ 117.
. . . . . . . . .
सर्वज्ञाय नमस्तुभ्यं शाश्वताय नमोऽस्तु ते ।
संपूज्याय नमस्तुभ्यं वरदाय नमोऽस्तु ते ॥ 118.

(Pl.29) 7. अनन्ताय नमस्तुभ्यं सर्वगाय नमोऽस्तु ते ।

- - - - - - - - -

य सर्वपापानि रुद्रलोकं स गच्छति ॥ ११९.

भोगार्थी लभते भोगान् राज्यार्थी राज्यमाप्नुयात् ।

कन्यार्थी लभते कन्यां योगार्थी योगमाप्नुयात् ॥ १२०.

- - - - - - प्रमुच्यते ।

बन्धनान्मुच्यते बद्धो यशोर्थी लभते यशः ॥ १२१.

यान्यांश्चिन्तयते कामान् तांस्तान्प्राप्नोति भावितः ।

शैवं पदमवाप्नोति - - - - ॥ १२२.

इति शिवधर्मशास्त्रे पूजाधर्म
शिवधर्मसंग्रं नाम
सप्तमोऽध्यायः

8 नन्दिकेश्वरः ॥.

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।

लीयन्ते तानि लिंगे तु तस्मा - - - - ॥ १.

8. — — — — — यज्ञैश्च दीक्षितः ।

pl.30.

यः पूजयेन्महालिंगं पुण्यं सर्वार्थसिद्धिदम् ॥ २.
शतेन स्थापितं लिंगं सहस्रेण तु चालयेत् ।
सुस्थितं दुःस्थितं वापि शिवलिंगं न चालयेत् ॥ ३.
घृताभिषेकं यः कुर्याद् अहोरात्रं शिवस्य तु ।
पुष्यमासे समुद्युक्तो नियतं श्लक्ष्णधारया ॥ ४.
गीतनृत्तोपहारेण शंखवादित्रनिःस्वनैः ।
कुर्याज्जागरणं तत्र प्रदीपाद्युपशोभिते ॥ ५.
समस्तपाप~~संयुतः~~ निर्मुक्तः समस्तकुलसंयुतः ।
समस्तकामसंपूर्णः समस्तगुणसंयुतः ॥ 6.
ध्वजाढ्यैः स्वमहायानैः असंख्येयैरनुपमैः ।
युक्तः शिवपुरे नित्यं मोदते शिववत्सुखी ॥ 7.
ग्रहणे विषुवे चैव पुण्येषु दिवसेषु च ।
घृताभिषेकं यः कुर्यान् महापुण्यमवाप्नुयात् ॥ 8.
घृताभिषेकं यः ~~कुर्यात्~~ पश्येत आसमाप्तेरुपोषितः ।
विधूय सर्वपापानि शिवलोके महीयते ॥ ९.
एकः पूजयते भक्त्या भक्त्या चान्यः प्रपश्यति ।
तुल्यमेव फलं ताभ्यां भक्तिरेवात्र कारणम् ॥ 10.
यः कुर्यात्पर्वकालेषु महापूजाप्रवर्तनम् ।
शिवस्य रथयात्रां वा नगरान्तः परिभ्रमात् ॥ 11.

(pl.36) 8.

महाचित्रैः ध्वजैः छिद्रैः किंकिणीरव कान्वितैः ।
वितानध्वजमालाभिः घण्टाचामर दर्पणैः ॥ 12.
शंखभेर्यादि निर्घोषैः गीत वादित्र (नाट्यादि) संयुतैः ।
लेख्यदारुमयैर्यन्त्रैः मातृ यक्षगणादिभिः ॥ 13.
उदकान्तोययन्त्रैश्च बह्वाश्चर्यैरनेकशः ।
डोलाश्चक्रयन्त्रैश्च रथमन्दिरशोभितैः ॥ 14.
दध्यन्नपानखाद्याद्यैः महासत्रसमायुतैः ।
महाजनसमाकीर्णं यथा विभवविस्तरम् ॥ 15.
सर्वदानानि पुण्यानि सर्वयज्ञफलानि च ।
अत्युग्रतपसां पुण्यं सर्वतीर्थफलानि च ॥ 16.
लब्धा नरवरः श्रीमान् शिवयात्रा प्रवर्तनैः ।
शिवलोके महाभोगैः शिववन्मोदते सदा ॥ 17.
तस्यान्ते देवराजत्वं सुचिरं कालमाप्नुयात् ।
जम्बुद्वीपाधिपः श्रीमान् तस्यान्ते च भवेत्पुनः ॥ 18.
आलिंगं वेदिपर्यन्तं वादित्राकृतकम्बलम् ।
घृतधाराफलं तस्य माघे पौर्णिमपर्वणि ॥ 19.
जागरं गीतनृत्ताद्यैः सकृत्कृत्वा तु पर्वणि ।
मन्वन्तरशतं साग्रं शिवलोके महीयते ॥ 20.
कुत्राहि (भि) रामनाट्याद्यं शिवस्यायतनाग्रतः ।
सम्यक्प्रेक्षणकं दत्वा रुद्रलोके महीयते ॥ 21.

(PL 30) 8. स्वरूपः सुभगः श्रीमान् परिहृष्टोऽत्र जायते ।
सप्तद्वीपसमुद्रायाः क्षितेरधिपतिर्भवेत् ॥ 22.
रूपं पिष्टमयं कृत्वा त्रिणेत्रं रत्नभूषितम् ।
शुक्लोपवीतसंयुक्तं एकपादं विशेषतः ॥ 23.
दन्तेषु मौक्तिकं तस्य प्रवालं च तथोष्ठयोः ।
दद्याद्वज्रं च नेत्राभ्यां वैडूर्यं वाप्यसंभवे ॥ 24.
हेमरूप्यं च हस्ताभ्यां ताम्रं पादे च विन्यसेत् ।
अण्डजैः पौण्ड्रजैर्वस्त्रैः विविधैः परिवेष्टयेत् ॥ 25.
सुभगैर्दिव्यगन्धैश्च पुष्पैश्चापि विभूषयेत्
विविधैर्भक्ष्यभोज्याद्यैः बलिं तत्र प्रकल्पयेत् ॥ 26.
भोजयेच्छिवभक्तांश्च विप्रांश्चैवस्या प्रतर्पयेत् ।
प्रीयतां मे शिवो नित्यं भुक्त्वा चोत्थापयेद्विजान् 27.
तैरेव सार्धं विप्रेन्द्रैः तद्रूपं तु शिवालये ।
(भ) नित्वा समर्पयेद्देव्यां शिवलिंगसमीपतः ॥ 28.
(PL 31) सर्वयज्ञफलं प्राप्य / सर्वदानफलानि च ।
स्वरूपस्वरूपदानेन शिवलोके महीयते ॥ 29.
भोजनं घृतसंपूर्णं मधुनापरिशोभितम् ।
दद्यात्कृष्णतिलानां च प्रस्थमेकं तु मागधम् ॥ 30.
द्विगुणं तण्डुलानां तु पृथक् प्रस्थं प्रकल्पयेत्
अण्डजैः पौण्ड्रजैर्वस्त्रैः विचित्रैः परिवेष्टयेत् ॥ 31.

(pL31)

8. एवं संवेष्ट्य वस्त्राभ्यां बलिमेवं निवेदयेत् ।.
अर्चयित्वा विधानेन पौर्णमास्यां विशेषतः ॥ ३२.
युगकोटिसहस्राणि शिवलोके महीयते ।.
पुण्यक्षयादिहागत्य समृद्धे जायते कुले ॥ ३३
मेधावी सुभगः श्रीमान् वेदवेदांगपारगः ।.
ताम्रपात्रं पयःपूर्णं कृत्वा तत्स्थं च कांचनम् ॥ ३४.
प्रच्छाद्योपरिपद्मेन गन्धपुष्पार्चितं महत् ।.
आवेष्ट्य वस्त्रयुग्मेन नववस्त्रैश्च पूरितम् ॥ ३५.
शिवभक्तद्विजं सम्यग् भोजयित्वा सदक्षिणम् ।.
प्राच्यां समुद्गते सोमे प्रतीच्यां च रवौ गते ॥ ३६.
पौर्णमास्यां तु वैशाख्यां नीत्वा पात्रं शिवाग्रतः ।.
प्रीयतां मे महादेवः सोममूर्तिर्जगत्पतिः ॥ ३७.
इत्युक्त्वा वचनं ध्यायन् देवदेवमुमापतिम् ।.
तस्मै विप्राय तत्पात्रं अर्पयेद्भक्तितः शनैः ॥ ३८.
एतत्सोमव्रतं नाम कृत्वा रुद्रान्तिकं व्रजेत् ।.
रुद्रलोकात्परिभ्रष्टो भवेज्जातिस्मरो नरः ॥ ३९.
पूर्वाभ्यासेन तेनैव पुनः शिवपदं व्रजेत् ।.
पौर्णमास्यामथाषाढ्यां शिवं संपूज्य यत्नतः ॥ ४०.
उपवीतं शिवे दद्यात् शिवभक्तांश्च भोजयेत् ।.
पुनरेवं तु कार्त्तिक्यां संपूज्यैवं समापयेत् ॥ ४१.

यती
8. नन्दीनां दक्षिणां दद्यात् सूत्रवस्त्रादिपूर्वकाम् ।

(31)

यः कुर्यात्साकृदप्येवं चातुर्मास्यपवित्रकम् ॥ 42.

कल्पकोटिशतं दिव्यं रुद्रलोके महीयते ।

पुण्यक्षयात्परिभ्रष्टः चतुर्वेदी प्रजायते ॥ 43.

इच्छाया वा भवेद्राजा गुणरूपसमन्वितः ।

भूमिदानस्य यत्पुण्यं कन्यादानस्य यत्फलम् ॥ 44.

मुखवाद्येन यत्पुण्यं उभयं लभते नरः ।

तदेव पुण्यं गीतस्य नृत्तस्य च विशेषतः ॥ 45.

तदेव जयशब्दस्य हस्ततालध्वनौ तथा ।

यो गां पयस्विनीं दद्यात् तरुणीं वृषसंयुताम् ॥ 46.

शिवाय तेन दत्तं स्यात् जगत्सर्वं चराचरम् ।

वृषभं परिपूर्णांगं उदारं च शशिप्रभम् ॥ 47.

गोपतिं धूर्वहं वापि शिवाय विनिवेदयेत् ।

यावन्ति तस्य रोमाणि तत्प्रसूतिकुलेषु च ॥ 48.

तावद्युगसहस्राणि रुद्रलोके महीयते ।

शिवाग्निकार्यमुद्दिश्य सुरूपां सुपयस्विनीम् ॥ 49.

कुलीनां कपिलां दत्वा दत्तं भवति गोशतम् ।

गिरिकान्तारदुर्गेषु मातेव परिरक्षति ॥ 50.

यत्नेन कपिलां तस्मात् शिवाय विनिवेदयेत् ।

शिवस्नानाग्निकार्यार्थी उत्पन्नां कपिलां यतः ॥ 51.

(PL.31) 8. तस्मात्तत्रैव संयोज्या कपिका शुभमिच्छता ।
कापिलं यः पिबेच्छूद्रः शिवसंस्कारवर्जितः ॥ 52.
स याति नरकं घोरं यावदाभूतसंप्लवम् ।
हुतशेषं पिबेद्विप्रः स्वर्गी स्यादन्यथा पशुः ॥ 53.
संस्कारेण वियुक्तं चेत् संस्कारो दुर्लभः शुभः ।
गामभ्यर्च्य नमस्कृत्वा कुर्याद्यस्तु प्रदक्षिणम् ॥ 54.
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।
गवां हुंकारशब्देन दर्शनात्स्पर्शनादपि ॥ 55
पापं प्रणश्यते यस्मात् तस्मात्पश्येत्स्पृशेदपि ।
कुतस्तेषां हि पापानि येषां गृहमलंकृतम् ॥ 56
(PL.32) सततं बालवत्साभिर्भि गोभिः श्रीभिरिव स्वयम् ।
यानि तीर्थानि मेदयात् मासमात्रात्सरांसि च ॥ 57.
गवां शृंगोदकस्नानात् कलां नार्हन्ति षोडशीम्
गवां मस्थानि कंपेत मृतगावं न वर्जयेत ॥ 58.
यावज्जिघ्रति तद्गन्धं तावत्पुण्यैः प्रपूर्यते ।
गवां कण्डूयनाद्दुपाद. गोप्रदानसमं भवेत् ॥ 59.
तुल्यं गोशतदानस्य भयरोगादिपालनम् ।
तृणोदकादिसंयुक्तां यः प्रदद्याद्गवां महीम् ॥ 60.
स गोमेधसमं पुण्यं लभते नात्र संशयः ।
बहुनात्र किमुक्तेन गावः पाल्याः प्रयत्नतः ॥ 61.

(Pl 32)

8. गावो देयाः सदा रक्ष्याः स्पृश्या दृश्याश्च सर्वदा ।
ये ताडयन्ति गां पापाः सर्वलोकस्य मातरम् ॥ 62
आक्रोशयति यो मोहात् आक्रुष्टं त्रायिकं जगत् ।
ताडनेन गवां मोहात् समन्तात्ताडितं जगत् ॥ 63.
ताडयेद्यस्तु गां मोहात् यश्चाक्रोशेन्नराधमः ।
नरकाग्नौ स पच्येत गवां निश्वासपीडितः ॥ 64
पालाशेनैव दण्डेन मृदुना गां निवर्तयेत् ।
गच्छ गच्छेति तां ब्रूयान् मा मातरिति वारयेत् ॥ 65.
मलोत्सर्गं च यः कुर्यात् पक्षयोरुभयोरपि ।
द्वादश्यां पौर्णमास्यां वा चतुर्दश्यष्टमीषु च ॥ 66.
तस्य गावो वृषो विष्णुः शिवो मा सर्वदेवताः ।
शान्तिं कुर्वन्तु सुप्रीता स्वर्गमायुर्बलं श्रियम् ॥ 67.
दास्यन्ति च सदा नित्यं कल्याणं भद्रमेव च ।
एवं यो वर्तते गोषु ताडनाक्रोशवर्जितः ॥ 68.
महतीं श्रियमाप्नोति रुद्रलोकं स गच्छति ।
गोब्राह्मणार्थमुद्युक्तं प्राणैर्यदि विमुच्यते ॥ 69.
प्राप्नोति परमं स्थानं रुद्रलोकं स गच्छति ।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् ॥ 70.
एकत्र मंत्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ।
न च मंत्रैर्विना यज्ञो हविषा च प्रवर्तते ॥ 71.

T.32



(p.32)

8. तस्माद्विप्राश्च गावश्च पुण्यात्पुण्यतरा उभौ ।
गोभिर्यज्ञाः प्रवर्तन्ते गोषु देवाः प्रतिष्ठिताः ॥ 72.
गोभिर्वेदास्समुत्कीर्णाः सषडंगपदक्रमाः ।
शृंगमूले गवां नित्यं ब्रह्मा विष्णुःस्वयं स्थितौ ॥ 73.
शृंगाग्रे सर्वतीर्थानि चराणि स्थावराणि च ।
शिरोमध्ये महादेवः सर्वदेवपतिः स्थितः ॥ 74.
ललाटे पार्वतीदेवी नासाग्रे चैव षण्मुखः ।
कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ ॥ 75.
कर्णयोरश्विनीदेवौ नेत्रे च शशिभास्करौ ।
दन्तेषु वायवःसर्वे जिह्वायां वरुणः स्थितः ॥ 76.
सरस्वती च हुंकारे (यम) यक्षौ च गण्डयोः ।
संध्याद्वयं तथोष्ठौ च ग्रीवायामिन्द्र आश्रितः ॥ 77
रक्षांसि च ककुद्देशे साध्याश्चोरसि संस्थिताः ।
चतुष्पात्सकलो धर्मः स्वयं जंघासु संस्थितः ॥ 78.
ऊरुमध्येषु गन्धर्वाः खुरमध्येषु पन्नगाः ।
खुराणां पश्चिमाग्रे च अप्सराश्च समाश्रिताः ॥ 79.
रुद्रैकादशकं पृष्ठे वसवः सर्वसिद्धिषु ।
श्रोणीतटस्थाः पितरः स्थिता योनौ च मातरः ॥ 80.
श्रीरपाने गवादन्यन् नागा लांगूलसंश्रिताः ।
आदित्यरश्मयो वाले पिण्डीभूता व्यवस्थिताः ॥ 81.

(PL32)

8. साक्षाद्गंगा च गोमूत्रे गोमये यमुना स्थिता ।
अष्टाविंशद्देवकोट्यो रोमकूपेषु संस्थिताः ॥ 82.
ऋषयश्च तथा सर्वे रोमरन्ध्रेषु संस्थिताः ।
उदरे पृथिवी देवी सशैलवनकानना ॥ 83.
चत्वारः सागराः पूर्णाः गवां ये च पयोधराः ।
जठरे गार्हपत्याग्नि- हृदये दक्षिणाग्निकः ॥ 84.

(PL33)

मुखे चाहवनीयोऽग्निः तथा चांगे पतिव्रताः ।
अस्थिशुक्ले स्थितस्सर्वो ह्यश्वमेधादिकः क्रतुः ॥ 85.
एतच्च कथितं सर्वं गोषु यच्च व्यवस्थितम् ।
गोषु दत्तं हुतं भुक्तं गोषु सर्वं चराचरम् ॥ 86.
तस्माद्गावो न हिंस्यान्तु पालनीयाश्च सर्वदा ।
गावस्तुल्याश्च वन्द्याश्च गावो मां पान्तु नित्यशः ॥ 87
ब्रह्मणा ब्रह्मशब्देन स्तूयते प्रणवेन यः ।
स शिवः शाश्वतो देवः गोषु मारीं व्यपोहतु ॥ 88.
सर्वरोगहरेणापि रविणा यः प्रणम्यते ।
स शिवः शाश्वतो देवो गोषु मारीं व्यपोहतु ॥ 89.
इहामुत्र स्थितानेक विघ्नेशगणपूजितः ।
स शिवः शाश्वतो देवो गोषु मारीं व्यपोहतु ॥ 90.
श्रीमता रुचिरांगेण घण्टाकर्णध्वनेन यः ।
नित्यं प्रणम्यते भक्त्या हृष्टेनार्द्रेण चेतसा ॥ 91.

(P.33)

8. स शिवः शाश्वतो देवो गोषु मारीं व्यपोहतु ।
नित्यं रुद्रसमोपेतो रुद्रशक्तिसमन्वितः ॥ 92.
नन्दिना दण्डिना चापि चण्डिना भा(सु)रभूतिना ।
एतैरन्यैर्गणैर्यक्षैः सर्वतोऽपि विशेषतः ॥ 93.
घण्टाकर्णगणोपेतः शिवज्ञानविनायकः ।
शिवतेजोतिभावेन गोषु मारीं व्यपोहतु ॥ 94.
शिवाय देवदेवाय महादेवाय शंभवे ।
रुद्राय स्थाणवे नित्यं हरायोग्राय ते नमः ॥ 95
परमेशाय सिद्धाय सर्वसिद्धिप्रदायिने ।
त्रियम्बकाय शान्ताय शान्तरूपाय ते नमः ॥ 96.
अभिमंत्र्य सदा तोयं मंत्रैरेतैर्यथाक्रमम् ।
प्रोक्षयीत गवां देहं ततः शान्तिर्भविष्यति ॥ 97.
य इमां पठते गोषु रोगार्तीसु विशेषतः ।
गोसावित्रीं महापुण्यां गवां शान्तिर्भविष्यति ॥ 98.
प्रातरुत्थाय सततं गोसावित्रीमिमां पठेत् ।
गवांचोत्सर्गकालेषु प्रस्थाने वा समागमे ॥ 99.
आयुष्मान्बलवांश्रीमान् गोमान्धनपतिर्भवेत् ।
देहान्ते परमं स्थानं स गच्छेन्नात्र संशयः ॥ 100.
प्रभूततोयेषु बृहत्तृणेषु
स पुंगवा नित्यमरोगवासाः ।

(P. 33)

8. चरन्तु गावः सुखिता वनेषु
क्षीरं प्रयच्छन्तु सुखं स्वपन्तु ॥ 101.
यो ऽलंकृत्य शिवायाश्वं उत्तमं विनिवेदयेत् ।
सो ऽश्वमेधसहस्रस्य फलमष्टगुणं भवेत् ॥ 102.
सुविनीतां स्त्रियं दासीं हृद्यां वा विनिवेदयेत् ।
नरमेधस्य यज्ञस्य फलमष्टगुणं लभेत् ॥ 103.
निवेदयीत यो नागं भक्त्या भद्रमलंकृतम् ।
शिवाय पर्वदिवसे तस्य पुण्यफलं शृणु ॥ 104.
समरैरावतप्रख्यैः गजैर्युक्तैः सुशोभनैः ।
प्रक्रीडते महायानैः शतसंख्यैरनेकशः ॥ 105
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
रुद्रलोके वसेदन्ते भवेदिन्द्रः सुराधिपः ॥ 106.
चतुर्युगसहस्रान्ते स गां प्राप्य नराधिपः ।
भवेदिन्द्रसमः श्रीमान् रूपवीर्यश्रुतान्वितः ॥ 107.
यः शिवाय जलोपेतां सर्वसस्यप्ररोहिणीम् ।
महीं महीपतिर्दद्यात् तस्य पुण्यफलं शृणु ॥ 108.
यावद्दण्डा भवेद्भूमि- र्दीयमाना समन्ततः ।
तावत्कल्पसहस्राणि रुद्रलोके महीयते ॥ 109.
एवं सर्वत्र विज्ञेयं फलदण्डप्रमाणतः ।
ग्रामखेटपुरक्षेत्र- विषयादिनिवेदने ॥ 110.

[initials] 6/6/59

(pl. 33) 8. सर्वसस्यफलोपेतं सर्वबाधाविवर्जितम् ।
ग्रामं शिवाय यो दद्यात् तस्य पुण्यफलं शृणु ॥ 111.
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
सर्वदानेषु यत्पुण्यं ग्रामदानेन तल्लभेत् ॥ 112.
(pl. 34) सूर्यकोटिप्रतीकाशैः दिव्यस्त्रीभिरलंकृतैः ।
संयुक्तं कोटिशोऽनेकैः सर्वकामसमन्वितैः ॥ 113
विमानैर्ग्रामदानेन त्रिसप्तकुलसंयुतः ।
यथेष्टमैश्वरे लोके क्रीडते कालमक्षयम् ॥ 114.
पुण्यं नगरदानस्य ग्रामदानाच्छताधिकम् ।
देशदानेन जानन्त्यं न शक्यं परिकीर्तितुम् ॥ 115.
रत्नान्नपानगोत्वाद्यं सर्वं भूमौ प्रजायते ।
तस्माद्भूमिप्रदानेन मरो भवति सर्वदः ॥ 116.
योऽन्यदत्तां स्वदत्तां वा भूमिं हरति मानवः ।
प्रपाच्यतेऽक्षयं कालं नरकेषु यथाक्रमम् ॥ 117.
सर्वं वा भूमिहरणाद् हृतमेव न संशयः ।
भूमिहर्ता वसेत्तस्य नरके कालमक्षयम् ॥ 118.
देवस्वानि हरन्तीह न [illegible]रा नरकनिर्भयाः ।
ब्रह्मस्वानि च यो मोहा- त्पच्यन्ते नरकेषु ते ॥ 119.
देवब्रह्मस्वपुष्टानि वाहनानि महीपतेः ।
युद्धकाले विशीर्यन्ते सैकताः सेतवो यथा ॥ 120.

(पृ.34)

8. यत्प्रदानाद्वसेत्स्वर्गे यावत्कालस्य संख्यया ।
तस्माच्छतगुणं कालं तद्धर्ता नरके वसेत् ॥121.
विंशत्यष्टौ च याः कोट्यो नरकाणां सुदारुणाः ।
क्रमेण तासु पच्यन्ते देवब्रह्मस्वहारिणः ॥122
कल्पान्ते च समुत्तीर्णा वृक्षकीटादियोनिषु ।
भ्रमन्ति सुचिरं कालं क्षुत्पिपासादिपीडिताः ॥123.
केनचिच्छिवभक्तेन शिवार्चायतनादिषु ।
उपयुक्ता भवन्तीह यावत्तावत्स पादपाः ॥124.
ततो निर्धूतपापास्ते मानवाः शिवतेजसा ।
शिवं प्रयान्ति संत्यज्य शरीरं यातनात्मकम् ॥125.

इति शिवधर्मशास्त्रे अष्टमोऽध्यायः

नन्दिकेश्वरः ॥.

9. अतः परमिदं पुण्यं वक्ष्यामि मुनिसत्तम! ।
पुण्यातिशयसंयुक्तं सर्वदेवैरनुष्ठितम् ॥1.

(PL 34)

9. ब्रह्मणा विष्णुना देव्या स्कन्देन्द्राभ्यां यमेन च ।
वरुणादित्यसोमाग्नि- मरुद्धनदनारदैः ॥ 2.
धर्मश्रीशुक्र नक्षत्र- विलोहित शनैश्चरैः ।
विश्वामित्र वसिष्ठाग्नि- बृहस्पति बुधादिभिः ॥ 3.
श्वेतागस्त्य दधीच्याद्यैः सर्वैश्च मुनिसत्तमैः ।
भृंगमात्र महाकाल- चण्डि दुण्डि गणाधिपैः ॥ 4.
वृष वासुकि कार्कोट- गुळिकानन्त तक्षकैः ।
पद्म शंख महापद्मैः अन्यैश्चापि महोरगैः ॥ 5.
सिद्धैर्यक्षैश्च गन्धर्वैः भूतैः किंपुरुषादिभिः ।
वसुभिश्चाप्सरैः सूर्यैः रक्षोभूतगणैरपि ॥ 6.
विश्वेदेवैस्तथा सर्वैः तैस्तैः सुकृतिभिर्वरैः ।
शिवे गतिर्यथा प्राप्ता सर्वगम्यतिशायिनी ॥ 7.
मया चेश प्रसादेन तथा विधिपरं शृणु ।
सितचन्दनतोयेन स्नाप्य लिंगं विलिप्य च ॥ 8.
श्वेतैर्विकसितैः पद्मैः संपूज्य प्रणिपत्य च ।
तत्र पद्मासने सौम्ये निश्छिद्रे पुष्पिते सिते ॥ 9.
मध्ये केसरजालस्य स्थाप्य लिंगं कनीयसम् ।
अंगुष्ठप्रतिमं लिंगं सर्वगन्धमयं शुभम् ॥ 10.
स्थाप्य दक्षिणमूर्तौ तु बिल्वपत्रैस्तदर्चयेत ।
अगरुं दक्षिणे पार्श्वे पश्चिमे तु मनश्शिलाम् ॥ 11.

(P.L34) 9. उत्तरे चन्दनं दद्याद् हरितालं तु पूर्वतः ।
सुगन्धैः कुसुमैरन्यैः विविधैश्चापि पूजयेत् ॥ 12.
धूपं कृष्णागरुं दद्यात् सघृतं चापि गुग्गुलुम् ।
वासांसि च सुसूक्ष्माणि विकेशानि निवेदयेत् ॥ 13.
पायसं घृतसंयुक्तं घृतदीपांश्च दापयेत् ।
सर्वं निवेद्य मंत्रेण ततो गच्छेत्प्रदक्षिणम् ॥ 14.
प्रणम्य भक्त्या देवेशं स्तुत्वा चान्ते क्षमापयेत् ।
(P.L35) |सर्वोपहारसंयुक्तं ततो लिंगं निवेदयेत ॥ 15.
शिवाय शिवमंत्रैश्च दक्षिणामूर्तिमाश्रितः ।
अनेन विधिना देवाः सर्वे देव(त्व)माागताः ॥ 16.
देवी देवत्वमापन्ना गुहः स्कन्दत्वमागतः ।
ब्रह्मा ब्रह्मत्वमापन्नो हरिर्विष्णुत्वमागतः ॥ 17
अनेन विधिना देवाः सर्वे देवत्वमागताः ।
इन्द्रश्च देवराजत्वं गणाश्च गणतां गताः ॥ 18.
एवं योऽर्चयते लिंगं पद्मैर्गन्धमयं शुभम् ।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ॥ 19.
एतद्व्रतोत्तमं गुह्यं शिवलिंगमहाव्रतम् ।
भक्तस्य ते मयाख्यातं न देयं यस्य कस्यचित् ॥ 20.
शिवभक्ते सदा देयं शिवेन कथितं पुरा ।
चिरपर्युषितं माल्यं शिवस्यापनयेत्तु यः ॥ 21.

(PL 385)

9. गोसहस्रफलं तस्य भवतीह न संशयः ।

इति शिवधर्मशास्त्रे शिव
लिंग महाव्रतं नाम न-
वमोऽध्यायः॥

—

श्रीनन्दिकेश्वरः॥

10. चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।
योऽब्दमेकं न भुंजीत शिवार्चनरतः शुचिः ॥ १
यत्पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम् ।
सत्यवादिषु यत्पुण्यं यत्पुण्यं तीर्थगामिनाम् ॥ २
अग्निहोत्रिषु यत्पुण्यं यत्पुण्यं यज्ञयाजिनाम् ।
तत्पुण्यं सकलं प्राप्य शिवलोकं स गच्छति ॥ ३
पृथिवीं भाजनं कृत्वा भुक्तः पर्वसु यत्नतः ।
अहोरात्रेण चैकेन त्रिरात्रफलमश्नुते ॥ ४
द्वयोर्मासस्य पंचम्योः द्वयोः प्रतिपदोर्नरः ।
सोपवासः सुगन्धांगः शयीत प्रियया सह ॥ ५

(P.205) 10

शेते निश्चलचित्तो यो रतिक्रीडादिवर्जितः ।
शिवानुस्मृतचित्तस्य तस्य पुण्यफलं शृणु ॥ 6.
दिव्यवर्षसहस्राणि दिव्यवर्षशतं तथा ।
तपस्तप्तं महत्तेन भवेदेव न संशयः ॥ 7.
भवभक्तिसुपूतात्मा यद्यपि स्यात्स पापकृत ।
शिवलोके वसेन्नित्यं शिववत्संवृतो गणैः ॥ 8.
कृष्णाष्टम्यां तु नक्ताशी यावत्कृष्णचतुर्दशी ।
इह भोगमवाप्नोति परत्र च शिवां गतिम् ॥ 9.
योऽब्दमेकं न भुंजीत नक्तं पर्वसु पर्वसु ।
ब्रह्मचारी जितक्रोधः शिवार्चाजपतत्परः ॥ 10.
संवत्सरान्ते विप्रेन्द्रान् शिवभक्तान्सदक्षिणम् ।
भोजयित्वा ततो ब्रूयात् प्रीयतां भगवांच्छिवः ॥ 11.
भोजयेद्यस्तु विद्वांसं कपालव्रतधारिणम् ।
भोजितास्तेन देवेशा ब्रह्मविष्णुमहेश्वराः ॥ 12
कपालपूर्णमशनं भैक्षं यो यस्य गृह्णति ।
कुलं तस्योद्धरत्येव दश पूर्वं दशापरम् ॥ 13.
पाद्याद्यर्चमनीयानि गन्धपुष्पैः समन्ततः ।
अर्चयेदतिनन्दष्ट्वा पश्चाद्द्रव्येण तर्पयेत् ॥ 14.
पूजितस्तैः शिवः साक्षात् पूजितो नात्र संशयः ।
अवमतेरवमतः स्यात स्वयं वै परमेश्वरः ॥ 15.

(P.L. 35)

10 श्रद्धया परया युक्तः कपाले यः प्रयच्छति ।
तत्तस्य फलते दानं व्रजेच्छतसहस्रधा ॥ 16.
एवं विधिसमायुक्तः शिवलोके महीयते ।
न च स्तु मानुष्यकं देहं पुनः संप्राप्नुयान्नरः ॥ 17.
उपवासात्परं भैक्षं भैक्षात्परमयाचितम् ।
अयाचितात्परं नक्तं तस्मान्नक्तेन वर्तयेत ॥ 18.
देवैर्भुक्तं तु पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा ।
अपराह्णे च पितृभिः संध्यायां गुह्यकादिभिः ॥ 19.
सर्वां वेलामतिक्रम्य नक्तभोजनमुत्तमम् ।
कामचारो महादेवो नक्तेनोद्धरते नरम् ॥ 20.
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
(P.L. 36) | अग्निकार्यमधः शय्यां नक्तभोजी समाचरेत ॥ 21.
कृष्णाष्टम्यां प्रयत्नेन कृत्वा नक्तं विधानतः ।
मार्गशीर्षे शुभे मासे शंकरं देवमर्चयेत ॥ 22.
पीत्वा शक्त्या च गोमूत्रं अनाहारो निशि स्वपेत् ।
अतिरात्रस्य यत्पुण्यं (शस्य) फलमष्टगुणं लभेत ॥ 23.
एवं पुष्येऽपि संपूज्य शंभुनामानमीश्वरम् ।
कृष्णाष्टम्यां घृतं प्राश्य वाजपेयफलं लभेत ॥ 24.
माघे माहेश्वरं नाम कृष्णाष्टम्यां प्रपूजयेत ।
निशि पीत्वा च गोक्षीरं गोमेधस्य फलं लभेत ॥ 25.

(PL 36)

10 फाल्गुन्यां तु महादेवं संपूज्य प्राशयेत्तिलान् ।
राजसूयस्य यज्ञस्य फलमष्टगुणं लभेत् ॥ 26.
चैत्रे च स्थाणुनामानं कृष्णाष्टम्यां प्रपूजयेत् ।
यवान्सुसंचितान्प्राश्य सोऽश्वमेधफलं लभेत् ॥ 27.
वैशाखे शिवनामानं इष्ट्वा रात्रौ कुशोदकम् ।
पीत्वा पुरुषमेधस्य फलमष्टगुणं लभेत् ॥ 28.
ज्येष्ठे पशुपतिं पूज्य गवां शृंगोदकं पिबेत् ।
गवां कोटिप्रदानस्य यत्पुण्यं तदवाप्नुयात् ॥ 29.
आषाढे चोग्रनामानं इष्ट्वा प्राश्य च गोमयम् ।
सौत्रामणेस्तु यज्ञस्य फलमष्टगुणं लभेत् ॥ 30.
श्रावणे शर्वनामानं पिण्याकं निशि भक्षयेत् ।
वर्षकोटिशतं साग्रं शिवलोके महीयते ॥ 31.
मासे भाद्रपदेऽष्टम्यां त्र्यम्बकं देवमर्चयेत् ।
प्राशनं बिल्वपत्राणां अनन्तं फलमाप्नुयात् ॥ 32.
मासे चाश्वयुजेऽष्टम्यां ईश्वरं नाम पूजयेत् ।
तण्डुलोदकमादिश्य पौण्डरीकाष्टकं लभेत् ॥ 33.
कार्तिके रुद्रनामानं संपूज्य प्राशयेद्दधि ।
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत् ॥ 34.
वर्षान्ते भोजयेद्विप्रान् शिवभक्तिपरायणान् ।
पायसं घृतसंयुक्तं मधुना च परिप्लुतम् ॥ 35.

(P.36)

10. भक्त्या हिरण्य वासांसि भक्त्या तेभ्यो निवेदयेत् ।
निवेदयीत रुद्राय गां च कृष्णां पयस्विनीम् ॥ 36.
वर्षमेकं चरेदेवं नैरन्तर्येण यो नरः ।
कृष्णाष्टमीव्रतं भक्त्या तस्य पुण्यफलं श्रृणु ॥ 37.
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।
वसेच्छिवपुरे नित्यं न भूयो भुवि जायते ॥ 38.
पुण्योत्सवेषु सर्वेषु विषुव ग्रहणादिषु ।
दानोपवासहोमाद्यं अक्षयं जायते कृतम् ॥ 39.
प्रतिमासं प्रवक्ष्यामि शिवव्रतमिहोत्तमम् ।
धर्मार्थकाममोक्षार्थं नराणां विदेहिनाम् ॥ 40.
पुष्यमासे तु संप्राप्ते यः कुर्याद्भक्तभोजनम् ।
जितेन्द्रियः सत्यवादी शालिगोधूमगोरसैः ॥ 41.
पक्षयोरष्टमीं यत्नात् उपवासेन वर्तयेत् ।
त्रिसंध्यमर्चयेदीशं अग्निकार्यं च शक्तितः ॥ 42.
भूमिशायी तु मासान्ते पौर्णमास्यां घृतादिभिः ।
कृत्वा स्नानं महापूजां शिवे यत्नात्प्रकल्पयेत् ॥ 43.
नैवेद्यं यावकप्रस्थं क्षीरसिद्धं निवेदयेत् ।
भोजयेच्च द्विजानष्टौ शिवभक्तान्सदक्षिणम् ॥ 44.
शिवायैवं गोमिथुनं कापिलं च निवेदयेत् ।
अलंकृत्यं सुरूपं च तस्य पुण्यफलं श्रृणु ॥ 45.

(PL36)

10. सूर्यकोटि प्रतीकाशैः विमानैः सार्वकामिकैः ।
रुद्रकन्यासमाकीर्णैः महावृषभसंयुतैः ॥ 46.
संगीतनृत्तवाद्याद्यैः अप्सरोगणसेवितैः ।
चामरैर्वीज्यमानश्च स्तूयमानः सुरासुरैः ॥ 47.

(PL37)

त्रिणेत्रशूलपाणिश्च | शिवैश्वर्यसमान्वितः ।
गच्छेच्छिवपुरं रम्यं यत्रास्ते शंकरः स्वयम् ॥ 48.
यावत्तद्रोमसंख्यानं तत्प्रसूतिकुलेषु च ।
तावद्युगसहस्राणि सुखी शिवपुरे वसेत् ॥ 49.
त्रिसप्तकुलजैः सार्धं भोगान्भुंक्ते यथेच्छया ।
ज्ञानयोगं समासाद्य स तत्रैव विमुच्यते ॥ 50.
योगाद्दुःखान्तमाप्नोति ज्ञानाद्योगः प्रवर्तते ।
शिवधर्मोद्भवं ज्ञानं शिवधर्मः शिवार्चनात् ॥ 51.
तृत्येष वः समाख्यातः संसारार्णववर्तिनाम् ।
शिवमोक्षक्रमोपायः शिवाश्रमनिषेवणम् ॥ 52.
माघमासे शुभे प्राप्ते यः कुर्यान्नैक्तभोजनम् ।
कृसरं घृतसंयुक्तं भुंजानस्संयतेन्द्रियः ॥ 53.
उपवासश्चतुर्दश्यां भवेदुभयपक्षयोः ।
शिवाथ पौर्णमास्यन्ते प्रदद्याद्घृतकम्बलम् ॥ 54.
कृष्णगोमिथुनं चात्र सुरूपं विनिवेदयेत् ।
शेषं कृत्वा यथोद्दिष्टं पूर्वोक्तं लभते फलम् ॥ 55.

10

(P.L.37)

इन्द्रनीलप्रतीकाशैः विमानैः सर्वकामिकैः ।
गत्वा शिवपुरं दिव्यं भोगान्भुंक्ते यथेप्सितान् ॥ 56

संप्राप्ते फाल्गुने मासे यः कुर्याद्भक्तभोजनम् ।
श्यामाकक्षीरनीवारैः जितक्रोधो जितेन्द्रियः ॥ 57.

चतुर्दश्यामथाष्टम्यां उपवासरतो भवेत् ।
पौर्णमास्यां महास्नानं पंचगव्यघृतादिभिः ॥ 58.

वल्मीकाग्रादिमृद्भिश्च गोमूत्रैर्गोमयादिभिः ।
त्वग्भिश्च क्षीरवृक्षाणां व्याघ्रगन्धादिभिः सह ॥ 59.

दद्याद्गोमिथुनं भक्त्या ताम्राभं परमेष्ठिने ।
शेषमन्यद्यथोद्दिष्टं कृत्वाप्नोति महत्फलम् ॥ 60.

पद्मरागप्रतीकाशैः विमानैः सार्वकामिकैः ।
गत्वा शिवपुरं दिव्यं पूर्वोक्तं लभते फलम् ॥ 61.

चैत्रमासे शुभे प्राप्ते यः कुर्याद्भक्तभोजनम् ।
पिष्टकं पयसा युक्तं भुंजानो विजितेन्द्रियः ॥ 62

दद्याद्गोमिथुनं चाग्र्य पाटलं समलंकृतम् ।
शिवायातिसुरूपं च शेषं पूर्ववदाचरेत् ॥ 63.

पुष्यरागप्रभैर्यानैः दिव्याप्सरगणसंस्तुतैः ।
यायाच्छिवपुरं दिव्यं दुष्प्रापमकृतात्मभिः ॥ 64.

वैशाखमासे संप्राप्ते यः कुर्याद्भक्तभोजनम् ।
शाल्यन्नं क्षीरसंयुक्तं भुंजानः संयतेन्द्रियः ॥ 65.

(P. 37)

10 गोष्ठशायी शिवध्यायी निशायामेकवस्त्रवृत् ।
नियमं च यथोद्दिष्टं सर्वं सम्यक् समाचरेत् ॥ 66.
वैशाखपौर्णमास्यां तु कृत्वा स्नानं व्रतादिभिः ।
शिवायालंकृतं श्वेतं दद्याद्गोमिथुनं शुभम् ॥ 67.
हिमकुन्देन्दुवर्णाभैः महायानैरलंकृतैः ।
सुश्वेतवृषसंयुक्तैः प्रयातीश्वरमन्दिरम् ॥ 68.
सर्वातिशयरूपाभिः स्त्रीभिश्च परिवारितः ।
नीलोत्पलसुगन्धाभिः क्रीडते कालमक्षयम् ॥ 69.
ज्येष्ठमासे शुभे प्राप्ते यः कुर्याद्भक्तभोजनम् ।
शाल्यन्नमंभसा धौतं आज्यक्षीरविवर्जितम् ॥ 70.
विरसानि तु रात्रौ स्याद् दिवा गामनुगच्छति ।
हितकारी गवां नित्यं अहंकारविवर्जितः ॥ 71.
पौर्णमास्यां च पूर्वोक्तं कुर्यात्स्नानादिकं विधिम् ।
दद्याद्गोमिथुनं चैव - - - - ॥ 72.
- - - - प्रस्थैः महायानैर्मनोरमैः ।
महासिंहनिबद्धैश्च क्रीडते कालमक्षयम् ॥ 73.
आषाढे सुशुभे प्राप्ते यः कुर्याद्भक्तभोजनम् ।
फुल्लखण्डाज्यसंमिश्रं दद्याद्भक्तं सगोरसम् ॥ 74.

(P. 38)

दद्याद्गोमिथुनं घोरं शिवायालंकृतं शुभम् ।
सामान्यं च विधिं सर्वं यः कुर्यात्प्राक् प्रचोदितम् 75.

(PL 88) 10

शुद्धस्फटिकसंकाशैः यानैः सारसवाहनैः ।
अणिमादिगुणैर्युक्तः शिववद्विचरेदयम् ॥76.
संप्राप्ते श्रावणे मासे यः कुर्यान्नक्तभोजनम् ।
क्षीरषाष्टिकभक्तेन सर्वभूतहिते रतः ॥77.
श्वेताग्रपादं पौण्ड्रं च दद्याद्गोमिथुनं शिवे ।
सामान्यमश्विकं कुर्याद् विधानं यत्प्रकीर्तितम् ॥78.
सुविचित्रैर्महायानैः विचित्राश्वनियोजितैः ।
गत्वा शिवपुरं रम्यं पूर्वोक्तं लभते फलम् ॥79.
प्राप्ते भाद्रपदे मासे यः कुर्यान्नक्तभोजनम् ।
हुतशेषं प्रभुंजानो वृक्षमूलाश्रितो दिवा ॥80.
रात्रौ चायतने वासी सर्वभूतानुकम्पकः ।
नीलस्कन्धं वृषं गां च शिवाय विनिवेदयेत् ॥81.
निशाकरकरप्रख्यैः वज्रवैडूर्यशोभितैः ।
चक्रवाकसमायुक्तैः विमानैः सर्वकामिकैः ॥82.
गत्वा शिवपुरं दिव्यं अमरासुरवन्दितः ।
स क्रीडते महाभोगैः यावदाभूतसंप्लवम् ॥83.
प्राप्ते चाश्वयुजे मासे यः कुर्यान्नक्तभोजनम् ।
घृताशनं प्रभुंजानः प्रसन्नात्मा जितेन्द्रियः ॥84.
वृषभं नीलवर्णं च उरोदेशे समानतम् ।
विमुच्य दद्याद्रुद्राय गामेकामप्यलंकृताम् ॥85.

(P.38)

10. विधिशेषमशेषेण पूर्वोक्तं समुपाचरेत् ।
प्राणान्ते च शिवस्थानं प्रयाति शिववत्सुखी ॥ 86.
स्वच्छमौक्तिकसंकाशैः इन्द्रनीलोपशोभितैः ।
जीवंजीवकसंयुक्तैः विमानैः सार्वकामिकैः ॥ 87.
संक्रीडते महाभोगैः यावदाभूतसंप्लवम् ।
प्राप्ते तु कार्तिके मासे यः कुर्यान्नक्तभोजनम् ॥ 88.
क्षीरोदनं प्रभुञ्जानः सत्यवादी जितेन्द्रियः ।
दद्याद्गोमिथुनं चात्र कापिलं च ज्वलत्प्रभम् ॥ 89.
पूर्वोक्तं च विधिं कुर्याच्च शिवतुल्यवतो भवेत् ।
कल्पानकसमप्रख्यैः महायानैर्महावकैः ॥ 90.
महासिंहकृताटोपैः शिववत्सेष्टते सुखी ।
मार्गशीर्षे शुभे मासे यः कुर्यान्नक्तभोजनम् ॥ 91.
यवान्नं पयसा युक्तं भुंजानः संयतेन्द्रियः ।
दद्याद्गोमिथुनं दिव्यं पाण्डरं समलंकृतम् ॥ 92.
शिवाय शेषं पूर्वोक्त- विधिना समुपाचरेत् ।
सितपद्मनिभैर्यानैः श्वेताश्ववरसंयुतैः ॥ 93.
गत्वा शिवपुरं दिव्यं शिवतुल्यबलो भवेत् ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दमो दया ॥ 94.
त्रिस्नानं चाग्निहवनं भूशय्या नक्तभोजनम् ।
पक्षयोरुपवासेन चतुर्दश्यष्टमीषु च ॥ 95.

(PL38)

16. इत्येवमादिक्रियया संचरेत शिवव्रतम् ।
उमामहेश्वरं नाम सदाप्रीतिविवर्धनम् ॥ 96.
अवियोगकरं शान्तं धर्मकामार्थसाधनम् ।
पौर्णमास्याममावास्यां चतुर्दश्यष्टमीषु च ॥ 97.
नक्तमब्दं प्रकुर्वीत हविष्यं ब्रह्मचारिणी ।
उमामहेशप्रतिमां हेम्ना कृत्वा सुशोभनाम् 98.
राजतीं वापि वर्षान्ते स्नापयित्वा घृतादिभिः ।
गन्धमाल्यैरलंकृत्य. वस्त्रयुग्मैश्च शोभनैः ॥ 99.
भक्त्या भोज्यैरशेषैश्च वितानध्वजचामरैः ।
भोजयेच्छिवभक्तांश्च दीनानाथांश्च तर्पयेत ॥ 100.
शक्त्या च दक्षिणां दत्वा शिवमन्ते क्षमापयेत ।
ताम्रकांस्यादि पात्रं वा सितवस्त्रावगुण्ठितम् ॥ 101.
कृत्वा चायतनं मध्ये प्रतिमामुपकल्पयेत ।
धृत्वा शिरसि तत्पात्रं वितानच्छत्रशोभितम् ॥ 102.
ध्वजशंखादिविभवैः शिवस्यायतनं नयेत ।
लिंगमूर्तेर्महेशस्य व्रतस्यान्ते निवेदयेत ॥ 103.

(PL39)

वेद्यन्ते स्थापयेत्पात्रं उपशोभासमन्वितम् ।
पश्चात्प्रदक्षिणीकृत्य प्रणिपत्य क्षमापयेत ॥ 104.
समाप्य तद्व्रतं पुण्यं शृणु सा यत्फलं लभेत ।
सूर्यकोटिप्रतीकाशैः विमानैः सार्वकामिकैः ॥ 105.

(p. 39)

10. यथेष्टमैश्वरे लोके रुद्रैः सार्धं प्रमोदते ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ 106.
तदन्ते सा महाभोगैः विष्णुलोके महीयते ।
ततः कर्मविशेषेण सर्वकामसमन्वितम् ॥ 107.
ब्रह्मलोकं समासाद्य परं सुखमवाप्नुयात् ।
ब्रह्मलोकात्परिभ्रष्टा श्रीमती परिपूजिता ॥ 108.
प्राजापत्यमवाप्नोति लोकपालनमस्कृता ।
भोगांश्च रुचिरान्भुक्त्वा सोमलोके महीयते ॥ 109.
सोमलोकादैन्द्रलोकं आसाद्येन्द्रपदे लभेत् ।
इन्द्रलोकाच्च गान्धर्वं लोकं प्राप्य प्रमोदते ॥ 110.
गन्धर्वराजपतिना सार्धं भोगे वसेच्चिरम् ।
महारत्नप्रभादीप्तैः उपशोभितमद्भुतम् ॥ 111.
यक्षलोकमनुप्राप्य यथाकामं प्रमोदते ।
सालोकालोकपर्यन्ते सर्वस्मिन्क्षितिमण्डले ॥ 112
यत्रक्वचित्सुखं दिव्यं तदशेषमवाप्नुयात् ।
एवं सर्वेषु लोकेषु भोगान्भुक्त्वा यथेप्सितान् ॥ 113.
क्रमादागत्य लोकेऽस्मिन् राजापतिमवाप्नुयात्
युवानं रूपसंपन्नं अशेषपृथिवीपतिम् ॥ 114.
धर्मार्थकाममोक्षज्ञं शिवभक्तं दृढव्रतम् ।
ततोऽसौ कर्मशेषेण भवतीश्वरभाविता ॥ 115.

P.L39.

P.10. स्वकर्मवासनायोगात् पुनः प्रारभते शुभम् ।
शुभाच्च पुनरप्येवं लोकान्याति सहस्रशः ॥ 116
यावदाप्नोति निर्वेदं तावद्भ्रमति कर्मणा ।
निर्वेदाच्चैव वैराग्यं वैराग्याज्ज्ञानसंभवः ॥ 117.
ज्ञानात्प्रवर्तते योगो योगाद्दुःखान्तमाप्नुयात्
उमामहेश्वरं नाम व्रतमीश्वरभाषितम् ॥ 118.
कारुण्यात्सर्वनारीणां नराणां च विशेषतः ।
तस्मात्सर्वप्रयत्नेन ह्युमामाहेश्वरं व्रतम् ॥ 119.
कर्तव्यं नरनारीभिः दुःखस्यान्तमवाप्नुयुः ।
उमादेवीप्रियार्थं तु तुष्टैनैवान्तरात्मना ॥ 120.
अष्टम्यां च चतुर्दश्यां नियता ब्रह्मचारिणी ।
वर्षमेकं तु भुंजीत महापुण्यजिगीषया ॥ 121.
वर्षान्ते प्रतिमां कृत्वा पूर्ववत्सोपकैः . . ।
स्नानाद्यन्तं व्रतं प्राप्त्वा पूर्वोक्तं लभते फलम् ॥ 122.
जाम्बूनदमयैर्यानैः चतुर्द्वारैरलंकृतैः ।
गत्वा शिवपुरं दिव्यं अशेषं भोगमाप्नुयात् 123.
शिवादिसर्वलोकेषु भोगान्भुक्त्वा यथेच्छया ।
क्रमादागत्य लोकेस्मिन् राजानां पतिमाप्नुयात् ॥ 124
या नार्युपवसेदेकं अब्दं कृष्णचतुर्दशी ।
वर्षान्ते प्रतिमां कृत्वा शान्तिपिष्टमयीं शुभाम् ॥ 125.

10. पिचानुकैपनैर्माल्यैः पातवस्त्रैश्च पूजयेत् ।
(PL 39)
पूर्वोक्तपरिवर्कं कृत्वा शिवाय विनिवेदयेत् ॥ 126.
सप्तभौमैर्महायानैः तप्तचामीकरप्रभैः ।
युगकोटिशतं साग्रं शिवलोके महीयते ॥ 127.
शिवादिसर्वलोकेषु भुक्त्वा भोगान्यथेप्सितान्
क्रमादागत्य लोकेऽस्मि- न्यथेष्टं पतिमाप्नुयात् ॥ 128.
याऽमावास्यां निराहारा भवेदब्दमतन्द्रिता ।
शुक्लं पिष्टमयं कृत्वा वर्षान्ते तु निवेदयेत् ॥ 129.
शिवाय राजतं पद्मं अस्वर्णकृतकर्णिकम् ।
भक्त्या विन्यस्य तन्मूर्ध्नि शेषं पूर्ववदाचरेत् ॥ 130.
कामतोऽपि कृतं पापं भ्रूणहत्यादि यद्भवेत् ।
तत्सर्वं शुक्लमानेन च्छिद्यापारी न संशयः ॥ 131.
(PL 40)
महापद्मविमानेन नानानारीसमन्विता ।
युगकोटिशतं साग्रं शिवलोके महीयते ॥ 132.
शिवादिसर्वलोकेषु भुक्त्वाभोगान्यथेप्सितान्
इमं लोकं क्रमात्प्राप्य यथेष्टं पतिमाप्नुयात् ॥ 133.
पौर्णमास्याममावास्यां अब्दमेकं दृढव्रता ।
वर्षान्ते सर्वगन्धाढ्यं प्रतिमां विनिवेदयेत् ॥ 134.
सुपवित्रैर्महायानैः दिव्यगन्धवहैः शुभैः ।
वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥ 135.

(pl. 40)

10. यथेष्टमैश्वरे लोके भुक्त्वा भोगानशेषतः ।
क्रमादागत्य लोकेऽस्मि- न्राजानं पतिमाप्नुयात् ॥ 136
संप्राप्ते कार्तिके मासे एकभुक्तेन वर्तयेत् ।
क्षमाऽहिंसादिनियमैः संसक्ता ब्रह्मचारिणी ॥ 137.
गुडान्नमिश्रं पिण्याकं मासेन विनिवेदयेत् ।
अष्टम्यां च चतुर्दश्यां उपवासरता भवेत् ॥ 138.
इन्द्रनीलप्रतीकाशैः विमानैः सार्वकामिकैः ।
वर्षायुतशतं साग्रं शिवलोके महीयते ॥ 139.
यथावत्सर्वलोकेषु भोगानासाद्य सर्वतः ।
क्रमादागत्य लोकेऽस्मिन् यथेष्टं पतिमाप्नुयात् ॥ 140.
इत्येवं सर्वलोकेषु विधिस्तुल्यः प्रकीर्तितः
एकभुक्तोपवासस्य फलं च सदृशं भवेत् ॥ 141.
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
शिवपूजाग्निहोमश्च संतोषोऽस्तेयभावना ॥ 142.
सर्वव्रतेषु यद्धर्मः सामान्यो दशधा स्मृतः ।
विशेषमपि वक्ष्यामि प्रतिमासं व्रतं प्रति ॥ 143.
मार्गशीर्षे शुभे मासे वृषं पिष्टविनिर्मितम् ।
गन्धमाल्यैरलंकृत्य शिवाय विनिवेदयेत् ॥ 144.
वृषयुक्ते महायानैः आरोहणसुशोभितैः ।
वर्षायुतशतं साग्रं शिवलोके महीयते ॥ 145.

(P.L.40)

10. सर्वदेवनिकायेषु संप्राप्य सुखमुत्तमम् ।
क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् ॥ 146
पुण्यमासे शुभे प्राप्ते शूलं कृत्वा पिनाकिने ।
गन्धपुष्पैरलंकृत्य शिवाय विनिवेदयेत् ॥ 147.
महापुष्पकयानेन दिव्यगन्धप्रवाहिना ।
वर्षायुतशतं दिव्यं रुद्रलोके महीयते ॥ 148.
भुक्त्वा तु विपुलान्भोगान् अशेषपुरसंभवान् ।
संप्राप्यैवं क्रमाल्लोके यथेष्टं पतिमाप्नुयात् ॥ 149.
रथमश्वयुतं माघे दीपमालाप्रशोभितम् ।
पैष्टलिंगसमायुक्तं शिवायतनमानयेत् ॥ 150.
महारथोपमैर्यानैः श्वेताश्ववर संयुतैः ।
वर्षायुतशतं साग्रं शिवलोके महीयते ॥ 151.
अनुभूयातुलान्भोगान् अशेषपुरसंभवान् ।
क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् 152.
फाल्गुने प्रतिमां पैष्टीं कृत्वा रूपसमन्विताम् ।
गन्धमाल्यैरलंकृत्य स्थापयेदीश्वरालये ॥ 153.
यानैरप्रतिमैर्दिव्यैः गीतवादित्रसंकुलैः ।
वर्षायुतशतं साग्रं रुद्रलोके महीयते ॥ 154.
सर्वामरनिकायेषु प्राप्य भोगान्सुदुर्लभान्
संप्राप्यैवं क्रमाल्लोके यथेष्टं पतिमाप्नुयात् ॥ 155.

(pl. 40)

10. चैत्रे च वकुमारं च कृत्वा पैष्टमलंकृतम् ।
स्थाप्य पात्रे यथोक्ते च आनयेच्छिवमन्दिरे ॥ 156.
शरदिन्दुप्रतीकाशैः विमानैः सार्वकामिकैः ।
वर्षकोटिशतं साग्रं शिवलोके महीयते ॥ 157.
कर्मक्षयादिहागत्य पुत्रपौत्रसमन्विता ।
अभीष्टं पतिमासाद्य लभेद्भोगान्सुदुर्लभान् ॥ 158.
तण्डुलाढकपिष्टेन कृत्वा कैलासपर्वतम् ।

(pl. 41)

ईश्वरोमासमायुक्तं सर्वधातुविभूषितम् ॥ 169.
(स्थाप्य पात्रे यथोक्ते च आनयेच्छिवमन्दिरे ।
शरदिन्दुप्रतीकाशैः विमानैः सार्वकामिकैः) ॥ 160.
कन्दरैर्विविधैश्चित्रैः लवणप्रस्थसंयुतैः ।
सर्वरत्नसमायुक्तं स्थापयेदीश्वरालये ॥ 161.
कैलासव्रतमित्येतद् वैशाखे या समाचरेत् ।
कैलासकामकैर्यानैः शिवलोके महीयते ॥ 162.
शिवादिसर्वलोकेषु भुक्त्वा भोगानशेषतः ।
क्रमादागत्य लोकेऽस्मि- न्राजानं पतिमाप्नुयात् 163.
लिंगं पिष्टमयं कृत्वा ज्येष्ठे मासे सवेदिकम्
भक्त्या संपूज्य गन्धाद्यैः वस्त्रयुग्मेन वेष्टयेत् ॥ 164.
उपशोभाविशेषेण तत्र जागरमाचरेत् ।
प्रभाते ध्वजशंखाद्यैः शिवाय विनिवेदयेत् ॥ 165.

(P. 41) 10 शुद्धस्फटिकसंकाशैः विमानैः सार्वकामिकैः ।
वर्षकोटिशतं साग्रं शिवलोके महीयते ॥ 166.
भुक्त्वा भोगान्यथाकामं अशेषपुरसंभवान् ।
क्रीडाविशेषभावैश्च मोदते शंकरालये ॥ 167.
क्रमादागत्य लोकेऽस्मि-न्राजानं पतिमाप्नुयात् ।
गृहे पिष्टमयं कृत्वा आषाढे सप्तभौमिकम् ॥ 168.
सर्वबीजरसैश्चापि संपूर्णं शुभलक्षणम् ।
गृहोपकरणैर्युक्तं मुसलोलूखलादिभिः ॥ 169.
सर्वधान्यसमायुक्तं सर्वमण्डनभूषितम् ।
सर्वधातुसमाकीर्णं सर्वरत्नोपशोभितम् ॥ 170.
सर्वरत्नादिगोध्वाद्यैः दासीशय्याद्यलंकृतम् ।
एतैः पिष्टमयैः सर्वैः सुदीपाद्युपशोभितम् ॥ 171.
सर्वभक्ष्यसमाकीर्णं गन्धमाल्यैरलंकृतम् ।
श्वेतरक्तासितैःपीतैः ध्वजवस्त्रोपशोभितम् ॥ 172.
चतुर्विधेन चरुणा संयुतं सर्वपैस्तथा ।
आषाढे पौर्णमास्यां तु गृहे स्थाप्य शिवाग्रतः ॥ 173.
सर्वोपकरणोपेतं प्रणिपत्य निवेदयेत् ।
सप्तभूमैर्महायानैः सर्वभोगसमन्वितैः ॥ 174.
वर्षकोटिशतं साग्रं शिवलोके महीयते ।
भुक्त्वा तु विपुलान्भोगा-न्सर्वलोकेष्वनुक्रमात् ॥ 175.

(PL 41) 10 प्राप्नोति सर्वभोगाढ्यं सप्तभौमं गृहं लभेत् ।
सर्वधातुसमाकीर्णं विचित्रध्वजशोभितम् ॥ 176.
निवेदयीत शर्वाय श्रावणे तिलपर्वतम् ।
स्वच्छेन्द्रनीलसंकाशैः यानैरप्रतिमैः शुभैः ॥ 177
वर्षकोटिशतं दिव्यं शिवलोके महीयते ।
भुक्त्वा तु सकलान्भोगान् सर्वलोकेष्वनुक्रमात् ॥ 178.
क्रमाल्लोकमिमं प्राप्य राजानं पतिमाप्नुयात्
कृत्वा भाद्रपदे मासे विपुलं धान्यपर्वतम् ॥ 179.
सुवर्णवस्त्रसंयुक्तं शिवाय विनिवेदयेत् ।
सुविचित्रैर्महायानैः वरभोगसमन्वितैः ॥ 180.
वर्षकोटिशतं साग्रं शिवलोके महीयते ।
रुद्रलोकादिलोकेषु भुक्त्वा भोगान्यथेप्सितान् 181.
संप्राप्तोऽस्मिन्क्रमाल्लोके राजानं पतिमाप्नुयात् ।
सर्वधान्यसमायुक्तं सर्वबीजसमन्वितम् ॥ 182.
सर्वधातुसमायुक्तं सर्वरत्नोपशोभितम् ।
शृंगैश्चतुर्भिः संयुक्तं वि(ता)नच्छत्रशोभितम् ॥ 183.
गन्धमाल्यैश्च पुष्पैश्च प्रदीपैश्चोपशोभितम् ।
(PL 42) विविधैर्गीतनृत्तैश्च शंखवीणादिभिस्तथा ॥ 184.
ब्रह्मघोषैस्तथा पुण्यैः मंगलैश्च निषेवितम् ।
अष्टभिश्च ध्वजैर्युक्तं वितानच्छत्रशोभितम् ॥ 185.

(PL 42)

10. नगेन्द्रं मेरुनामानं त्रैलोक्याधारमुत्तमम् ।
तस्य मूर्ध्नि शिवं कुर्यात् सर्वदेवसमन्वितम् ॥ 186.
दैत्यगन्धर्वसिद्धाद्यान् यक्षभूतगणांस्तथा ।
विद्याधराप्सरोनागान् ऋषींश्चापि विशेषतः ॥ 187.
शालिपिष्टमयं सर्वं रूपं कृत्वा विचक्षणः ।
देवस्य दक्षिणे हस्ते शूलं त्रिदशपूजितम् ॥ 188.
एवं सर्वेषु देवेषु कुर्यादस्त्राण्यनुक्रमात् ।
शिवस्य महतीं पूजां कृत्वा चित्रसमन्विताम् ॥ 189.
पूजयेत्सर्वदेवांश्च दशदिक्षु बलिं हरेत् ।
विप्रांश्च भोजयेत्पश्चात् शिवभक्तान्सदक्षिणम् ॥ 190.
दीक्षितान्व्रतिनश्चैव अनुगम्य च साधुगान् ।
आचार्यानुगतान्सर्वान् सार्धं मेरुमुपस्थितान् ॥ 191.
सर्वालंकारसंयुक्तं यथा विभवकल्पितम् ।
निवेदयीत रुद्राय कार्तिके नगमुत्तमम् ॥ 192.
या कुर्यात्सकृदप्येवं तस्याः पुण्यफलं शृणु ।
सर्वागमेषु यत्पुण्यं मुनिभिः कथितं पुरा ॥ 193.
*तत्सर्वं कोटिगुणितं प्राप्नुयात्सा न संशयः ।
महारत्नप्रभैर्यानैः सर्वकामसमन्वितैः ॥ 194.
गीतनृत्तादिभिर्वाद्यैः अप्सरोगणशोभितैः ।
सूर्यकोटिसमप्रख्यैः विमानैर्मेरुसंनिभैः ॥ 195.

(p.42)

10. नरनारीगणाकीर्णैः दिव्यगन्धोपशोभितैः ।
देवदानवगन्धर्व- स्तूयमाना नराधिपैः ॥ 196.
स्वच्छन्दा सर्वगाभूत्वा प्रयातीश्वरमन्दिरम् ।
कल्पकोटिशतं दिव्यं मोदते सा महातपाः ॥ 197.
एवं सर्वेषु लोकेषु भुक्त्वा भोगान्यथेप्सितान्
पुण्यक्षयादिहागम्य राजानं पतिमाप्नुयात् ॥ 198.
सुरूपा सुभगा नित्यं भवेदीश्वरभाविता ।
यद्यत्कामं समुद्दिश्य नरनारीनपुंसकाः ॥ 199.
पूजयन्ति शिवं भक्त्या तत्तदेवाशु जायते ।.
मृण्मयं दारुजं शैलं ऐष्टकं वा सुकल्पितम् ॥ 200.
कृत्वा गृहं मठं वापि यथा विभवविस्तरम् ।.
सर्वोपकरणोपेतं सर्वधान्यप्रपूरितम् ॥ 201.
शिवाय तद्गृहं दत्वा सर्वान्कामानवाप्नुयात् ।.
कृत्वैकशुचिते हेमन्ते मासमेकं सुयन्त्रितः ॥ 202.
मासान्ते च रथं कुर्यात् चित्रवस्त्रोपशोभितम् ।.
श्वेतैश्चतुर्भिः संयुक्तं वृषभैः सम्यक्कृतम् ॥ 203.
शोभितं ध्वजदीपाद्यैः छत्रचामरदर्पणैः ।.
तण्डुलाढकपिष्टेन लिङ्गं कृत्वा सवेदिकम् 204.
विन्यस्य रथमध्ये तु पूजयेत्कृतलक्षणम् ।
तद्रात्रौ राजमार्गेण शंखभेर्यादिनिःस्वनैः ॥ 205

(PL 42) 10. भ्रामयित्वा शनैः पश्चात् शिवायतनमानयेत् ।
तत्र जागरपूजाभिः प्रदीपाद्युपशोभया ॥ 206.
प्रेक्षणीयप्रदानैश्च क्षपयित्वा शनैर्निशाम् ।
प्रभाते स्नपनं कृत्वा तद्भक्तानां च भोजनम् 207.
दीनान्धकृपणानां च यथाशक्त्या च दक्षिणाम्
रथं शोभासमायुक्तं शिवाय विनिवेदयेत् ॥ 208.
भुक्त्वा च बान्धवैः सार्धं प्रणम्येशं गृहं व्रजेत् ।
सर्वव्रतानां प्रवरं अस्मिन्धर्मः समाप्यते ॥ 209.
व्रतं शिवना(र)थं नाम सर्वकामार्थसाधकम् ।
सर्वभूतेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥ 210.
तत्सर्वं शिवनाथेनैव तत्पुण्यफलभाग्भवेत् ।
सूर्यायुतप्रतीकाशैः विमानैः सार्वकामिकैः ॥ 211.
त्रिसप्तकुलमुद्धृत्य शिवलोके महीयते ।
(PL 43) भुक्त्वा तु वि|पुलान्भोगान् सर्वलोकेष्वनुक्रमात् ॥ 212.
कल्पकोट्ययुतं साग्रं तस्यान्ते स महीपतिः ॥ ॐ
सुरूपा सुगुणं चैव सर्वभोगसमन्वितम् ॥ 213.
लभते कुलजं शुद्धं पतिं सा सर्वमानयेत् ।
पंचतुलीसमायुक्तां मृद्वीं खट्वां सुकल्पिताम् 214.
सर्वोपकरणोपेतां शिवशय्यां प्रकल्पयेत्
शिवं देवीसमायुक्तं पैष्टमस्यां निवेदयेत् ॥ 215.

(PL 43)

10. शिवज्ञानार्थतत्त्वज्ञं आचार्यं विनयान्वितम् ।
संपूज्य गन्धपुष्पाद्यैः वस्त्रालंकारचामरैः ॥ 216.
भक्ष्यभोज्यैरशेषैश्च ततः शय्यां निवेदयेत् ।
तत्तले वस्त्रतन्तूनां परिसंख्या तु यावती ॥ 217.
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।
शिवादिसर्वलोकेषु भुक्त्वा भोगानशेषतः ॥ 218.
क्रमादागत्य लोकेऽस्मिन् सिंहासनपतिर्भवेत् ।
दशगावो वृषश्चैको वृषभैकादशी स्मृता ॥ 219.
शिवाय विनिवेद्यैवं अवधारय तत्क्रमम् ।
रुद्रैकादशतुल्याढ्यो बलभोगादिभिर्गुणैः ॥ 220.
शिवादिसर्वलोकेषु यथेष्टं मोदते सुखी ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ 221.
भुक्त्वा तु विपुलान्भोगान् अशेषकुलजैः सह ।
तदन्ते ज्ञानमासाद्य प्रसादात्परमेष्ठिनः ॥ 222.
विमुच्य मोहकलिलं स्वातन्त्र्यैवावतिष्ठति ।
सवृषं गोशतं दद्यात् शिवायातीव शोभनम् ॥ 223.
त्रिसप्तकुलजैः सार्धं शृणु यत्क्रमान्नुयात् ।
सूर्यकोटिप्रतीकाशैः सर्वकामसमन्वितैः ॥ 224.
महायानैरसंख्यातैः अमरासुरपूजितैः ।
शतरुद्रबलोपेतो वीररुद्र इवापरः ॥ 225.

(p.143)

10. गत्वा शिवपुरं दिव्यं अशेषाधिपतिर्भवेत् ।
भुक्त्वा तु विपुलान्भोगान् प्रळये समुपस्थिते ॥ 226.
मोहकंचुकमुत्सृज्य स कैवल्यमवाप्नुयात् ।
सर्वज्ञः परमः शुद्धः सामान्येव व्यवस्थितः ॥ 227.
शिववत्परिपूर्णश्च शिववत्पतिरव्ययः ।
यो दद्याद्दुग्धयमुर्वी शिवायातीव शोभनाम् ॥ 228
सप्तद्वीपां क्षितिं दत्वा यत्पुण्यं तदवाप्नुयात् ।
पादद्वयं शिरोर्ध्वं च यदा वत्सो विनिर्गतः ॥ 229.
तदादौ पृथिवी ज्ञेया तद्दाता स्यान्महीप्रदः ।
इति शिवधर्मशास्त्रे व्रतोपवास-
गोप्रदानाध्यायो नाम द-
शमोऽध्यायः

═══.

11 श्रीनन्दिकेश्वरः ॥.
सर्वेषामेव वर्णानां शिवाश्रमनिषेविणाम्,
शिवधर्माः शिवेनोक्ता धर्मकामार्थमुक्तये ॥. 1.
ब्राह्मणः क्षत्रियो वैश्यः स्त्रीशूद्रो वा शिवाश्रमी ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ॥. 2.

॥ स्वाश्रमादुत्तरे कुर्यात् पुष्पारामं सुशोभनम् ।
(PL 43) आग्नेय्यामग्न्यगारं च ऐशान्यामीश्वरालयम् ॥ 3.
प्रदेशासंभवे कुर्यात् यत्र स्यात्संभवो भुवः ।
शिवस्य दक्षिणे कुर्यात् तद्वत्स्याद्यागशालकम् ॥ 4.
नैर्ऋत्यां च समिद्देशं वारुण्यामुदकाश्रयम् ।
वायव्यां धान्यदेशं वै कौबेर्यां भाण्डगृहकम् ॥ 5.
त्रिसंध्यमर्चयेदीशं अग्निकार्यं च शक्तितः ॥
एककालं त्रिकालं वा पूजयेच्छक्तितः शिवम् ॥ 6.
असंपूज्य शिवं मोहात् न भुंजीत कदाचन ।
एष धर्मः परो ज्ञेयः शैवो भवतु वा न वा ॥ 7
कार्यातिपातसंरोधात् राष्ट्रविभ्रमणादिषु ।
मनसा पूजयेद्भक्त्या वाचिकैर्वा जपादिभिः ॥ 8.
शिवाश्रमाश्रितैः पूजा कर्तव्या भक्तितः सदा ।
मनसा पूजयेद्योगी पुष्पैरारण्यसंभवैः ॥ 9.
शिवार्थं पुष्पहिंसायां न भवेत्तु स हिंसकः ।
यद्यल्पमपि चात्मार्थं हिंसते हिंसकस्तथा ॥ 10.
(PL 44) शिवार्चनपरो नित्यं तद्भक्तातिथिपूजकः ।
पर्वमैथुनवर्जी स्याद् धीमांश्शिवगृहाश्रमी ॥ 11.
देवाग्न्यतिथिभैक्षार्थं पचेच्छैवार्थकारणात् ।
आत्मार्थं यः पचेन्मोहात् नरकार्थं स जीवति ॥ 12.

(P. 44) 11. देवार्थं पचनं येषां संतानार्थं च मैथुनम् ।
स्वर्गार्थं जीवितं तेषां नरकार्थं विपर्यये ॥ 13.
शिवाग्निगुरुपूजाभिः पापैरेतैर्न लिप्यते ।
अन्यैश्च पातकैर्घोरैः तस्मात्संपूजयेत्स्वयम् ॥ 14.
वित्ततृतीयभागेन प्रकुर्वीत शिवार्चनम् ।
कुर्वीत वा तदर्धेन यतोऽनित्यं हि जीवितम् ॥ 15.
न्यायेनोपार्जयेद्वित्तं अन्यायं परिवर्जयेत् ।
अन्यायेनार्जितैर्द्रव्यैः नरकार्थं स जीवति ॥ 16.
यः शिवब्रह्मचारी स्यात् स शिवार्चाग्नितत्परः ।
भवेज्जितेन्द्रियः शान्तो नैष्ठिको भौतिकोऽपि वा ॥ 17
सर्वरोगविनिर्मुक्तः कन्दमूलफलाशनः ।
शिववैखानसो ज्ञेयः शिवार्चनपरो भवेत् ॥ 18.
निवृत्तः सर्वरागेभ्यः शिवध्यानरतः सदा ।
ज्ञेयः शिवयतीन्द्रोऽयं भस्मनिष्ठो जितेन्द्रियः 19.
रुद्राक्षकंकणं हस्ते जटैका चैव मस्तके ।
लिंगं शिवाश्रमस्थानां भस्मना च त्रिपुण्ड्रकम् ॥ 20.
शिरसा धारयेत्कोटिं कर्णयोश्च सहस्रकम् ।
शतकोटि गले बद्ध्वा सहस्रं बाहुमध्यतः ॥ 21.
अप्रमाणफलं हस्ते रुद्राक्षस्य तु धारणात् ।
उच्छिष्टो वापि कण्ठेन युक्तो वा सर्वपातकैः ॥ 22.

(P.144)

॥ हरन्ति सर्वपापाश्च रुद्राक्षस्पर्शनेन तु ।
रुद्राक्षकण्ठमाश्रित्य श्वानोऽपि क्रियते यदि ॥ 23.
सोऽपि रुद्रत्वमाप्नोति किं पुनर्मानवादयः ।
हस्ते मूर्ध्न्युपवीते वा रुद्राक्षं धारयेत यः ॥ 24.
आगम्य सर्वसत्वानां रुद्रलोकं स गच्छति ।
रुद्रभक्तैः सदा धार्या रुद्रसंख्या जटाः शुभाः ॥ 25.
ध्वंसनी सर्वदुःखानां ताभी रुद्रत्वमाप्नुयात ।
सितेन भस्मना कुर्यात त्रिसंध्यं यस्त्रिपुण्ड्रकम् 26.
सर्वपापविनिर्मुक्तः शिवलोके महीयते ।
रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम् ॥ 27.
ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् ।
योगी सर्वांगिकस्नानं आपादतलमस्तकम् ॥ 28.
त्रिसंध्यमाचरेन्नित्यं आशु योगमवाप्नुयात् ।
यः स्नानमाचरेन्नित्यं आग्नेयं संयतेन्द्रियः ॥ 29.
कुलैकविंशमुत्तार्य स गच्छेत्परमां गतिम् ।
भस्मस्नानं जलस्नानाद् असंख्येयगुणाधिकम् ॥ 30.
तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमाचरेत ।
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥ 31.
तत्फलं लभते सर्वं भस्मस्नानान्न संशयः ।
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ॥ 32.

(P.L.44) ||. भस्मस्नानं निषेवेत मुच्यते सर्वपातकैः ।
भस्मस्नानात्परं स्नानं पवित्रं नैव विद्यते ॥ ३३.
इत्युक्त्वा मुनिदेवेभ्यः स्नातोऽनेन शिवः स्वयम्
ततः प्रभृति ब्रह्माद्या मुनयश्च शिवार्थिनः ॥ ३४.
सर्वपर्वसु यत्नेन भस्मस्नानं प्रचक्रिरे ।
तस्मादेतच्छिवस्नानं आग्नेयं यः समाचरेत् ॥ ३५.
अनेनैव शरीरेण स रुद्रो नात्र संशयः ।
दुःशीलयुक्तो वा यो वा को वाऽप्यलक्षणम् ३६.
श्रुतिशासनसंयुक्तः स पूज्यो राजपुत्रवत् ।
गुणवत्पात्रपूजायां तस्य शासनपूजनम् ॥ ३७.
शासनं पूजयेत्तस्मात् अविचारं शिवाज्ञया ।
शिवाज्ञापूजनात्साक्षात् शिवो भवति पूजितः ॥ ३८.
अविकल्पयतिस्तस्मात् पूजयेच्छिवशासनम् ।
(P.L.45) सोऽपि यां गतिमाप्नोति न तां यज्ञशतैरपि ॥ ३९.
आचमेसोथ विधिना निर्लेपः शिवभस्मना ।
गन्धलेपविशुद्ध्यर्थं नित्यमद्भिरुपस्पृशेत् ॥ ४०.
गन्धलेपविहीनोऽपि भावतुष्टो विशुध्यति
भावशुद्ध्या भवेच्छुद्धिः शुद्धभावस्ततो भवेत् । ४१
भस्मस्नानेन यत्पूर्वं पापमामरणान्तिकम् ।
जन्मान्तरकृतं यत्तद् दहत्यग्निरिवेन्धनम् ॥ ४२.

(P.L.45) ॥

स्नानं वारुणमाग्नेयं दिव्यं वायव्यमानसे ।
पंच स्नानानि विप्राणां विहितानि विशुद्धये ॥ 43.

वारुणं वारिणा स्नानं आग्नेयं भस्मना भवेत् ।
वृष्ट्या सातपया दिव्यं वायव्यं रजसा गवाम् ॥ 44.

मानसं ध्यानमात्रेण विहितं शिवयोगिनाम् ।

उदकुम्भसहस्रेण मृदाढकशतेन वा ॥ 45.
अपि वर्षसहस्रेण भावदुष्टो न शुध्यति ।

भावपूतं चरेच्छौचं वस्त्रपूतं जलं पिबेत् ॥ 46.
दृष्टिपूतं न्यसेत्पादं सत्यपूतं वचो वदेत् ।

जटाकलापधारी स्यात् पक्षे वा वपनं भवेत् ॥ 47.
यदेव पुण्यं यत्नेन तत्पुण्यं वपनाद्भवेत् ।

जटी मुण्डी शिखी वापि भिक्षाशी विगतस्पृहः ॥ 48.
मौनी भूतानुकम्पश्च यतिः शान्तमनाश्चरेत् ।

माधूकरीं चरेद्वृत्तिं एकान्नं परिवर्जयेत् ॥ 49.
उपवासात्परं भैक्षं एकान्नं गृहिणाऽऽहृतम् ।

यः सर्वसंगनिर्मुक्तः शिवः शिवपरायणः ॥ 50.
सोऽपीह वपनं कृत्वा योगीन्द्रानुचरो भवेत् ।

वसेदायतने नित्यं सगणः शिवधार्मिकः ॥ 51.
योगिनामन्नदानेन योगस्थानमवाप्नुयात् ।

पुष्पारामैककर्तात्मा पुष्पवाटीक्रियापरः ॥ 52.

(PL45) ॥ त्रिःस्नानपूजासंयुक्तः कौपीनाच्छादनः सदा ।
योगिनां भक्तियोगेन योगस्थानमवाप्नुयात् ॥ 53.
शिवध्यानपरः शान्तः शिवधर्मपरायणः ।
सर्व एवाश्रमा ज्ञेयाः शिवधर्माः शिवाश्रमाः ॥ 54.
महाव्रताष्टकं कार्यं ईशानोक्तं शिवार्थिभिः ।
सर्वव्रतानां प्रवरं अस्मिन्धर्मः समाप्यते ॥ 55.
शिवे भक्तिः शिवे शान्तिः अहिंसा सर्वदा शमः ।
सन्तोषः सत्यमस्तेयं ब्रह्मचर्यं तथाष्टकम् ॥ 56.
यथासंभवपूजाभिः कर्मणा मनसा गिरा ।
शिवभक्तिः सदा कार्या तद्वच्च शिवयोगिषु ॥ 57
स्वदेहाग्निविशेषेण शिवभक्तांश्च पालयेत् ।
भयदारिद्र्यरोगेभ्यः तेषां कुर्यात्प्रियाणि च ॥ 58.
शिवस्य परिपूर्णस्य किं नाम क्रियते जनैः ।
यत्कृतं शिवभक्तानां तत्कृतं च शिवे भवेत् ॥ 59.
सुदूरमपि गन्तव्यं यत्र माहेश्वरो जनः ।
प्रयत्नेनापि द्रष्टव्यं तत्र संनिहितो हरः ॥ 60.
माहेश्वरस्य भक्तस्य शिवार्चनरतस्य च ।
पूजां कृत्वा यथान्यायं अश्वमेधफलं भवेत् ॥ 61.
नित्यं शिवकथासक्तो नित्यं शिवपरायणः ।
अर्चयित्वा यथान्यायं गाणपत्यमवाप्नुयात् ॥ 62.

(PL45) ॥ शिवाश्रमगतान्यस्या शिवभक्तान्प्रपूजयेत् ।
स्वागतासनपाद्यार्घ्य- मधुपर्कादिभोजनैः ॥ 63.
पूजयित्वा यथान्यायं यः कुर्यादभिवादनम् ।
दशवर्षसहस्राणि रुद्रलोके महीयते ॥ 64.
प्राप्ताय शिवभक्ताय तुष्टिं व्रजति यो नरः ।
वर्षकोटिसहस्राणि वसेद्वैश्रवणालये ॥ 65.
प्राप्ताय शिवभक्ताय यो दद्याच्छुभमासनम् ।
त्रिंशद्वर्षसहस्राणि पुरन्दरपुरे वसेत् ॥ 66.
शिवभक्तस्य विप्रस्य पादौ प्रक्षाल्य भक्तितः ।
घृतेनाभ्यज्य यो दद्यात् विष्णुलोके महीयते ॥ 67
शिवभक्तान्द्विजान्प्राप्तान् मधुपर्काद्यनुक्रमात् ।
भोजयित्वा यथान्यायं शिवलोके महीयते ॥ 68.
(PL46) श्रान्तसंवाहनं कृत्वा सोमलोके महीयते ।
मृदुशय्याप्रदानेन सिंहासनपतिर्भवेत् ॥ 69.
प्रतिश्रयप्रदानेन हैमं स्वर्गे गृहं लभेत् ।
सुशीतकं दत्वा सर्वान्कामानवाप्नुयात् 70.
लभेद्दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियम् ।
दत्वाम्भः स्नानशौचार्थं वारुणं लोकमाप्नुयात् ॥ 71.
स्वेदबिन्दुपरीतांगं अध्वनः श्रमकर्शितम् ।
संवीज्य तालवृन्तेन वायुलोके महीयते ॥ 72.

(pl.46) ॥ क्षुत्पिपासातुरं शान्तं आर्तं रोगिणमेव वा ।
पालयित्वा यथान्यायं सर्वपापैः प्रमुच्यते ॥ 73.
रोगार्तस्य शिवं कृत्वा भेषजाद्यैः प्रयत्नतः ।
युगकोटिशतं साग्रं शिवलोके महीयते ॥ 74.
कालात्पुनरिहायातः समस्तज्ञानपारगः ।
सुरूपः सुभगः श्रीमान् निर्मलो निरुपद्रवः ॥ 75.
शरणागतमुद्विग्नं आक्रान्तं रिपुतस्करैः ।
मा भैषीरिति चाश्वास्य शिवलोके महीयते ॥ 76.
दारिद्र्यार्णवनिर्मग्नं हाहाभूतमचेतसम् ।
समुद्धृत्य यथा शक्त्या सर्वान्कामानवाप्नुयात् 77
पतिताः शस्त्रसंकीर्णाः श्वचण्डालादिपक्षिणाम्
कारुण्यात्सर्वभूतानां देयमन्नं स्वशक्तितः ॥ 78.
अत्यल्पमपि कारुण्याद् दत्तं भवति चाक्षयम् ।
तस्मात्सर्वेषु भूतेषु कारुण्याद्दानमुत्तमम् ॥ 79.
अभावे तृणभूम्यम्भः पत्रमूलफलानि च ।
दत्वागताय भार्योऽपि स्वर्गं यान्ति प्रियेण वा ॥ 80.
महीभृत्स्वर्गसोपानं यथा लोके प्रियं वचः ।
इहामुत्र सुखं तेषां वाग्येषां मधुरस्वरा ॥ 81.
अमृतस्यन्दिनीं वाचं चन्दनस्पर्शशीतलाम् ।
धर्माविरोधिनीमुक्त्वा सुखमक्षय्यमाप्नुयात् ॥ 82.

(PL 46) 11. अकं दानेन विप्रेन्द्र यजनाध्ययनेन वा ।
इदं तत्स्वर्गसोपानं अमकं यत्प्रियं वचः ॥ 83.
प्रत्युत्थायाभिगमनं वर्ज्यं चैवाप्रियं वचः ।
पूर्वाभिभाषणं तुष्टः प्रत्येकं स्वर्गहेतवः ॥ 84.
संपृच्छेदागतं भक्त्या चागतं स्वागतं वदेत् ।
गमनेऽप्यस्य वक्तव्यं पन्थानः सन्तु ते शिवाः 85
शिवं भवतु मे नित्यं अशेषार्थप्रसाधकम् ।
आशीर्वादमिदं वाच्यं सर्वकार्येषु सर्वदा ॥ 86.
नमस्काराभिवादेषु स्वस्तिमंगळवाचने ।
शिवं भवतु वो ब्रूयात सर्वकार्येषु सर्वदा ॥ 87.
एवमादि शिवाचारं अनुष्ठाय शिवाश्रमी ।
अशेषपापनिर्मुक्तः शिवलोके महीयते ॥ 88.
शिवभक्तेषु या भक्तिः तद्भक्ते - तेजकैः ।
शिवे भवति सा नित्यं भक्तिर्भक्तेष्वनुष्ठिता ॥ 89.
आकृष्टस्ताडितो वापि यो नाक्रोशेन्न ताडयेत् ।
वागाद्यविकृता स्वस्था क्षान्तिरेषा सुनिर्मला ॥ 90.
सर्वेषामेव तीर्थानां तीर्थं ज्ञानस्य पारगम् ।
ज्ञानतीर्थात्परं तीर्थं यत्पूर्णं क्षान्तिवारिणा ॥ 91.
ज्ञानयोगतपोजप्य- यज्ञदानानि सत्क्रियाः ।
क्रोधिनस्तु वृथा यस्मात् तस्मात्क्रोधं विवर्जयेत् ॥ 92.

(PL46) ॥. मर्मास्थि प्राणहृदयं निर्दहेदप्रियं वचः ।
न वाच्यमप्रियं तस्मात् शिवभक्तैर्विशेषतः ॥ 93.
क्षमा दानं तपः सत्यं क्षमाऽहिंसा क्षमा श्रुतम्
क्षमा स्वर्गश्च मोक्षश्च क्षमयैतज्जगद्धृतम् ॥ 94.
स शूरः सात्विको धीमान् स तपस्वी जितेन्द्रियः ।
येनाशु क्षान्तिशस्त्रेण क्रोधशत्रुर्विवर्जितः ॥ 95
निर्मलैः क्षान्तिसलिलैः लोकमाह्लाद्य शीतलैः ।
इह सौख्यमवाप्नोति परत्र च शिवां गतिम् ॥ 96.
आत्मवत्सर्वभूतेषु यो हिताय शिवाय च ।
स यथा वर्तते नित्यं अहिंसेयमुदाहृता ॥ 97.
(PL47) सर्वशास्त्रेषु/वेदेषु सर्वयज्ञेषु यत्फलम् ।
यो न हिंसति भूतानि तस्य पुण्यं ततोऽधिकम् 98.
त्रैलोक्यमपि यो दद्याद् अखिलं रत्नपूरितम् ।
चरेत्तपांसि सर्वाणि न तत्तुल्यमहिंसया ॥ 99.
अहिंसा परमो धर्मः शक्तानां परिकीर्तितम् ।
अशक्तानामयं धर्मो दानयज्ञादिपूर्वकः ॥ 100.
नातः परं प्रवक्ष्यामः क्वचिदप्यागमे वयम् ।
पुंसामभयदानात्तु दानमद्भुतमुत्तमम् ॥ 101.
सर्वभूताभयं दत्वा यश्चरेच्छान्तमानसः ।
इहैव सर्वभूतेभ्यो न भयं तस्य विद्यते ॥ 102.

(PL 47)

॥ यो न हिंसति भूतानि स्थावराणि चराणि च ।
सर्वदुःखविनिर्मुक्तः परां शान्तिमवाप्नुयात् ॥ 103.
पापे रमन्ते पापिष्ठा अतिक्रूरा नराधमाः ।
आभूतसंप्लवं यावत् पच्यन्ते नरकाग्निषु ॥ 104.
स्वदेशे यो नृपः कुर्यात् प्राणिघातनिवारणम् ।
स नृपः सह देशेन मोदते विभवैश्चिरम् ॥ 105
देहान्ते च महाभोगैः समस्तकुलसंयुतः ।
कल्पकोटिशतं साग्रं शिवलोके महीयते ॥ 106.
यः स्वार्थं वा परार्थं वा समस्तेन्द्रियसंयमः ।
अकार्येन प्रवर्तेत तमाहुः शान्तिलक्षणम् ॥ 107.
यः प्रशान्तेन्द्रियग्रामः सदाचन्द्रांशु निर्मलः ।
स प्राप्नोति शिवस्थानं शान्तः शान्तेन चेतसा ॥ 108.
यथाकालोपपन्नेन वृत्त्यायागतेन च ।
उत्पन्नार्थेषु यस्तोषः स तोषः परिकीर्तितः ॥ 109.
अतीतानागतार्थेषु वर्तमानेषु सर्वदा ।
नानुस्मरत्यतीतार्थान् सन्तोषोऽयमुदाहृतः ॥ 110.
तेन सर्वमवैरिष्टं तेन चाप्तं च तत्फलम् ।
येन तृष्णामहं त्यक्तं संतोषं सम्यगाश्रितः ॥ 111.
सन्तोषैश्वर्ययुक्तानां यत्सुखं शान्तचेतसाम् ।
देवासुरमनुष्याणां कुतः स्वप्नेऽपि ~~कुत्रिमम्~~ तत्सुखम् ॥ ॥112.

(PL 47)

|| स्वानुभूतं स्वदृष्टं च यः पृष्टार्थं न गृह्यते ।
यथा भूतार्थकथनं इत्येतत्सत्यलक्षणम् ॥ ११३.
सत्यं सत्यं पुनःसत्यं एतावत्सत्यलक्षणम् ।
परपीडाविनिर्मुक्तं यथावद्वचनं शुभम् ॥ ११४.
अश्वमेधायुतं पुण्यं सत्यं च तुलया धृतम् ।
अश्वमेधायुतात्सत्यं अयुतं दशभिर्गुणैः ॥ ११५.
सत्ये प्रतिष्ठितं ज्ञानं धर्मःसत्ये प्रतिष्ठितः ।
सत्ये प्रतिष्ठितं शौचं मोक्षःसत्ये प्रतिष्ठितः ॥ ११६.
स्वामिना रक्ष्यमाणानां उत्सृष्टानां च संभ्रमात् ।
परस्वानामनादानं इदमस्तेयलक्षणम् ॥ ११७.
अलोभेन परस्वेषु यो मनागपि वर्तते ।
कर्मणा मनसा वाचा स तृप्तः शिवतां व्रजेत् ॥ ११८.
मैथुनस्यासमाचारः तदचिन्तमजल्पनम् ।
लक्षणं ब्रह्मचर्यस्य समस्तेन्द्रियसंयमम् ॥ ११९
ब्रह्मचर्ये स्थितं सत्यं ब्रह्मचर्ये स्थितं तपः ।
ब्रह्मचर्ये स्थितं ज्ञानं ब्रह्मचर्ये स्थिता क्षमा ॥ १२०.
ये स्थिता ब्रह्मचर्येण ते नित्यं संस्थिताः शिवे ।
एकरात्रोषिता यापि सा गतिर्ब्रह्मचारिणः ॥ १२१
सा गृहस्थैर्न संप्राप्ता कृतयज्ञशतैरपि ।
यः संभवे समुत्सृज्य चेतसाऽऽस्ते निराकुलम् ॥ १२२.

(pl 47) जं ब्रह्म

11. अहो पतिव्रतः श्रीमान् नोपयाति स्त्रियं रतौ ।
पर्ववर्ज्यं जन्मोपि परदारविवर्जितः ॥ 122.
ब्रह्मचारिण एतेऽपि विज्ञेया हि शिवाश्रमे ।
शिवाग्न्यतिथिगुर्वर्थं कुर्यात्कर्माणि सर्वदा ॥ 123.
अहिंसाकल्पविज्ञेयो न स तस्याश्रमत्रये ।
शिवाग्निगुरुकार्येषु समुद्युक्तः सदा नरः ॥ 124.
तस्य सिध्यन्ति कर्माणि मनसा चिन्तितान्यपि ।

(pl 48)

एष धर्मव्रतः श्रीमान् | अष्टशाखः शिवोद्भवः ॥ 125.
न शक्यो विस्तराद्वक्तुं उपशाखाप्रभेदतः ।
यः पठेत शिवे भक्त्या आचाराध्यायमुत्तमम् ॥ 126.
त्रिसप्तकुलजैः सार्धं शिवलोके महीयते ।

इति शिवधर्मशास्त्रे शिव~~धर्म~~-वाश्रमा-
-चारो नाम एकाद-
शोऽध्यायः ।

---

12 श्रीनन्दिकेश्वरः ।

अथ संक्षेपतो वक्ष्ये शिवभक्तानुकम्पया ।
आद्यशाखोपशाखार्थ- शिवभक्तिसमुद्भवम् ॥ 1.

(PL 48)

12. क्वचिद्गच्छन्यदा पश्येत् शिवलिंगं प्रपूजितम् ।
सदा संपूज्य यो गच्छेत् स रुद्रो नात्र संशयः ॥ 2.
स्नाननैवेद्य वस्त्राणि नाददीत प्रियाण्यपि ।
दत्तं यच्छिवमुद्दिश्य तस्माद्दानेन यत्फलम् ॥ 3.
दृष्ट्वा यतनमासाद्य नमस्कृत्वा शिवं व्रजेत् ।
चतुष्पथं नदीं शैलं शिवयोगिनमेव च ॥ 4.
अवतीर्य नमस्कृत्वा दृष्ट्वा लिंगं दृढव्रतः ।
हस्तियानासनस्थोऽयः शिवयोगितपस्विनम् ॥ 5.
तत्रस्थोपि नमस्कृत्वा शिवलोके महीयते ।
यूकाश्वोष्ट्रवयो मत्स्य- मांसं लशुनकुंजनम् ॥ 6.
कनकद्वयं च सौवीरं कुत्सितानि विवर्जयेत् ।
निर्यासमप्यपक्वान्नं नित्यमेव विवर्जयेत् ॥ 7.
सर्वदानोग्रतपसां अश्वमेधायुतस्य च ।
फलं प्राप्नोति यत्नेन मत्स्यमांसस्य वर्जनात् ॥ 8.
सर्वदोषाश्रयं मद्यं इति पुराद्विवर्जयेत् ।
क्व मद्यं क्व शिवे भक्तिः क्व मांसं क्व शिवार्चनम् ॥ 9.
मद्यमांसप्रवृत्तानां (सक्ता) दूरे तिष्ठति शंकरः ।
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥ 10
तत्फलं लभते सर्वं यो मद्यं परिवर्जयेत् ।
गर्भादिसर्वसंस्कारे श्मशानान्ते च भोजनम् ॥ 11.

(PL48) 12. रजस्वलादिसंस्पृष्टिं शिवभक्तो विवर्जयेत् ।
न गोब्राह्मणभस्मानि लिंगच्छायां पदा स्पृशेत् ॥ 12.
न लंघयीत निर्माल्यं अप्सु तिष्ठेन्न नग्नतः ।
धारयेच्छिव निर्माल्यं भक्त्या केयं च भक्षयेत् ॥ 13.
भक्षणान्नारकान्गच्छेत् तद्विलंघ्य च मूढधीः ।
न तद्यः स्नानपूजार्थं प्रतिगृह्णाति शंकरः ॥ 14.
यत्र नैवेद्यनिर्माल्यं अरवलत्पूजयेच्छिवम् ।
भूप्रदेशो यथा कश्चित् स्वदेहमलदूषितम् ॥ 15.
नाश्रयेत तथा रुद्रो नरं निर्माल्यदूषितम् ।
असंस्पृश्यो भवेत्सोयं यो यस्यांगमलं स्पृशेत् ॥ 16.
तस्यां न संस्पृशेल्लिंगं नरो निर्माल्यदूषितः ।
यत्र नैवेद्यनिर्माल्यं संकीर्णं कलशादिभिः ॥ 17.
स्नानं वै क्रियते भक्त्या न तद्गृह्णाति शंकरः ।
मूर्तयो याः शिवस्याष्टौ तासु निन्दां विवर्जयेत् ॥ 18.
गुरौ च शिवभक्तेषु नृपसाधुतपस्विषु ।
अष्टम्यादिषु सर्वेषु पक्षयोरुभयोरपि ॥ 19.
श्मश्रुकर्माञ्जनाभ्यंगं प्रस्थानं च विवर्जयेत् ।
कुर्याद्विशेषतः पूजां नक्तं चात्र समाचरेत् ॥ 20.
परमेश्वरपूजां च कुर्यान्मंत्री समाहितः ।
शौचं च मृज्जलैः कुर्याद् गन्धलेपापनुत्तये ॥ 21.

21. योऽश्नीयादन्नमस्नातः पापमश्नात्स केवलम् ।

(P.L48) तस्मात्स्नात्वा प्रभुंजीत भस्मना सलिलेन वा ॥ 22.

प्रातःस्नात्वाम्भसा गच्छेद्भस्मना च शिवं पदम् ।

त्रिसंध्यमाचरेद्यस्तु शिवार्चामग्निपूजनम् ॥ 23.

पापकंचुकमुत्सृज्य शिवलोके महीयते ।

कुर्या ~~तस्मा~~त्प्रतिचतुर्मासं महापूजाप्रवर्तनम् ॥ 24.

भोजनं शिवभक्तानां शक्त्या दानं प्रकल्पयेत् ।

त्रिसप्तकुलसंयुक्तः समस्तैश्वर्यसंयुतः ॥ 25.

(P.L49.) वसेच्छिवपुरे | नित्यं चातुर्मास्यप्रवर्तनात् ।

एवं पर्वोत्सवे श्राद्धे पुण्येषु दिवसेषु च ॥ 26.

शिवं संपूज्य नैवेद्यैः पूजयेच्छिवयोगिनम् ।

पितरः सर्वदेवाश्च शिवमाश्रित्य संस्थिताः ॥ 27.

प्रीते शिवे तु ते सर्वे सुप्रीताः स्युर्न संशयः ।

ज्ञानवैराग्यसंपन्नं भस्मनिष्ठं जितेन्द्रियम् ॥ 28.

भोजयेच्छान्तमनसं श्राद्धेषु शिवयोगिनम् ।

यदीश्वरादितत्वानां परिज्ञानं विवेकता ॥ 29.

भवेत्साधर्म्यवैधर्म्यात् एतज्ज्ञानस्य लक्षणम् ।

द्वे नानिष्टं चेष्टि संप्राप्तं न चेष्टमभिनन्दति ॥ 30

रागद्वेषविहीनो यः स वैराग्येषु वर्तते ।

भस्मनिष्ठाप्रतिष्ठस्य दिवसेनापि यत्फलम् ॥ 31.

(P. 49) 12 न तच्छक्यं गृहस्थेन प्राप्तुं क्रतुशतैरपि ।
वश्येन्द्रियः प्रसन्नात्मा यो न द्वेष्टि न कांक्षति ॥ 32.
शब्दादिविषयान्भोगान् स विज्ञेयो जितेन्द्रियः ।
ज्ञानवैराग्यसंपन्नः शिवः शान्तेन चेतसा ॥ 33.
युक्तः षडंगयोगेन शिवयोगी प्रकीर्तितः ।
शिवधर्मोद्भवं ज्ञानं ज्ञानाद्वैराग्यसंभवः ॥ 34.
ज्ञानवैराग्ययुक्तस्य शिवयोगः प्रवर्तते ।
शिवयोगाच्च सर्वज्ञः परिपूर्णः सुनिर्वृतः ॥ 35.
स्वात्मन्यवस्थितः शुद्धः शिववत्सर्वगो भवेत् ।
सर्वेषामेव भूतानां उत्तमं मानुषं स्मृतम् ॥ 36.
सर्वेषामेव वर्णानां त्रैवर्ण्याः पुरुषा नराः ।
पुरुषेभ्यो द्विजः श्रेष्ठो द्विजेभ्यो वेदपारगः ॥ 37.
वेदविद्भ्यस्तु विद्वांसः तेभ्यस्तत्वार्थचिन्तकः ।
तत्वविद्भ्यश्च भावात्वं प्रतिबुद्धो विशिष्यते ॥ 38.
नानार्थतत्वकोटिभ्यो विशिष्टो योगमाश्रितः ।
योगिनां योगिकोटिभ्यः परमः शिवयोगिराट् ॥ 39.
तत्वार्थविदिकोटिभ्यः शिवयोगी विशिष्यते ।
योगज्ञा योगसिद्धाश्च पितरो योगसंभवाः ॥ 40.
भुंक्ते प्रीणन्ति ते तस्मात् द्विशोषितेव योगिनः ।
सर्वयज्ञतपोदानैः कृतैर्दत्तैश्च (र्वा) यत्फलम् ॥ 41.

(p.L 49)

12. तत्फलं लभते सर्वं संभोज्य शिवयोगिनम् ।
यज्ञाग्निकालरुद्राख्या दक्षिणाभ्यव मृत्विजः ॥ 42.
मन्त्रयजुस्साम संयोग एवं यज्ञः प्रकीर्तितः ।
ब्रह्मचर्यं जपो मौनं क्षान्तिराहारलाघवम् ॥ 43.
इत्येतत्तपसो रूपं अघोरं पंचलक्षणम् ।
यद्यदिष्टं विशिष्टं च न्यायप्राप्तं च यद्भवेत् ॥ 44.
तत्तद्गुणवते देयं एतद्दानस्य लक्षणम् ।
सर्वदोषैर्विरहितां सर्वसस्य प्ररोहिणीम् ॥ 45.
दद्याद्भूमिं जलोपेतां भूमिदानं तदुच्यते ।
एकच्छत्रां महीं कृत्वा द्विजेभ्यः प्रतिपादयेत् ॥ 46.
संपूर्णां यो नृपः कश्चित् महीदानं तदुच्यते ।
कन्यामलंकृतां दद्यात् अलंजीवनसंयुताम् ॥ 47.
द्विजाय वेदविदुषे कन्यादानं तदुच्यते ।
शिवभक्ताय विप्राय दत्वा कन्यां स्वलंकृताम् ॥ 48.
कुलत्रयं समुद्धृत्य स्वर्गं प्राप्नोति निश्चलम् ।
सर्वदोषविनिर्मुक्तं तरुणीं यः पयस्विनीम् ॥ 49.
यो गामलंकृतां दद्यात् गोदानमिति कीर्तितम् ।
मध्यमोत्तमवस्त्राणि यो दद्यात्तु नवानि च ॥ 50.
एतत्समासतो ज्ञेयं वस्त्रदानस्य लक्षणम् ।
ब्रह्मचारी समाधिस्थः शान्तः शिवपरायणः ॥ 51.

(PL47) 12. अहोरात्रं न भुंजीत उपवासस्य लक्षणम् ।
चत्वारिंशत्समायुक्तं पिण्डानां हि शतद्वयम् ॥ 52.
मासेनाद्याद्यथाकालं इति चान्द्रायणं स्मृतम् ।
(PL60) ऋषिभिः सर्वशास्त्रज्ञैः तपोनिष्ठैर्जितेन्द्रियैः ॥ 53.
देवैश्च सेवितं तोयं क्षितौ तीर्थं तदुच्यते ।
एवमादीनि दानानि तपांसि नियमानि च ॥ 54.
समस्तानि मयाशक्यं . . . वक्तुमेव च ।
सूक्ष्माणि साधकान्यत्र मुने वक्ष्यामि तानि ते ॥ 55.
रुद्रावतारस्थानानि पुण्यक्षेत्राणि निर्दिशेत् ।
मृतानां तेषु रुद्रत्वं शिवक्षेत्रेषु देहिनाम् ॥ 56.
वस्त्रापदं महाकोटि- रविमुक्तमहालयम् ।
गोकर्णं भद्रकर्णं च सुवर्णाक्षं च दीप्तिमत् ॥ 57.
स्थाण्वीश्वरं च विख्यातं त्रिषु लोकेषु विश्रुतम् ।
स्थानाष्टकमिदं ज्ञेयं रुद्रक्षेत्रमहोदयम् ॥ 58.
वस्त्रापदादि स्थाण्वन्तं रुद्रसायुज्यमाप्नुयात् ।
छगलण्डं द्विरण्डं च माकोटं मण्डलेश्वरम् ॥ 59.
कालंजरं शंकुकर्णं स्थूलेश्वरं स्थलेश्वरम् ।
पवित्राष्टकमित्येतत् महापुण्यविवर्धनम् ॥ 60.
मृताः प्रयान्ति तत्रैव शिवाख्यं परमं पदम् ।
गया चैव कुरुक्षेत्रं नाखलं नखलं तथा ॥ 61.

(pl.50)

(ह)
12. विमलं चाट्टहासं च महेन्द्रं भीममष्टकम् ।
एतद्गुह्याष्टकं नाथं सर्वपापविमोचनम् ॥ 62.
गत्वा तु पुरुषः श्रीमान् प्राप्नोति शिवमन्दिरम् ।.
श्रीपर्वतं हरिश्चन्द्रं जल्पमाम्रातिकेश्वरम् ॥ 63.
मध्यमं च महाकालं केदारं भैरवं तथा ।
एतद्गुह्यातिगुह्यं च अष्टकं समुदाहृतम् ॥ 64.
संतर्प्य च पितॄन्सर्वान् शिवं शान्तं पदं व्रजेत् ।.
(म) अमरेशं प्रभासं च नैमिशं पुष्करं तथा ॥ 65.
आषाढी दण्डिमुण्डी च भारभूतिश्च लाकुलम् ।.
लकुलीश्वरं च विख्यातं तथा प्रत्यात्मको महान् ॥ 66.
प्रत्यात्मिकाष्टकमिदं क्षेत्रं रुद्रस्य कीर्तितम् ।.
तत्र यान्ति मृताः सर्वे रुद्रस्य परमं पदम् ॥ 67
पंचाष्टकमिदं ज्ञेयं शिवक्षेत्रस्य लक्षणम् ।
दानाद्यावसथं कूपं उद्यानं देवतालयम् ॥ 68.
स्थानेष्वेतेषु यः कुर्यात् सोऽक्षयं फलमाप्नुयात् ।
क्षमास्पृहा दया सत्यं दानं शीलं तपः श्रुतम् ॥ 69.
एतदष्टांगमुद्दिष्टं परं पात्रस्य लक्षणम् ।.
शिवे भक्तिः क्षमासत्यं अशेषेन्द्रियसंयमः ॥ 70.
सर्वभूतेषु मैत्री च शिवधर्मस्य लक्षणम् ।.
शिवयोगी शिवज्ञानी शिवधर्मरतश्च यः ॥ 71

(p. 50) 12. इत्येतत्त्रिविधं ज्ञेयं शिवपात्रस्य लक्षणम् ।
यज्ञोपवासदानानि तपस्तीर्थफलानि च ॥ 72.
संपूर्णानि लभेद्भक्त्या संभोज्य शिवयोगिनम् ।
शिवमुद्दिश्य दातव्यं अनपेक्ष्य गुणाश्रयम् ॥ 73.
वित्तमीश्वरभक्तेभ्यः शिवदानस्य लक्षणम् ।
शिवभक्तद्विजं भक्त्या यः श्राद्धादिषु भोजयेत् ॥ 74.
कुलत्रयं समुद्धृत्य शिवलोके महीयते ।
बहुनात्र किमुक्तेन शिवभक्तं प्रपूजयेत् ॥ 75.
शिवभक्तः स्थितो भुंक्ते साक्षाद्भुंक्ते सदाशिवः ।
द्विजानां वेदविदुषां कोटिं संभोज्य यत्फलम् ॥ 76.
तत्फलं कोटिगुणितं संभोज्य शिवयोगिनम् ।
. . वीतरागाय भिक्षादानेन तद्भवेत् ॥ 77.
तस्माच्छ्राद्धे विशेषेण पुण्येषु दिवसेषु च ।
शिवमुद्दिश्य विप्रेन्द्रान् शिवभक्तांश्च भोजयेत् ॥ 78.
मृद्भस्माधारपात्राणि वंशालाबुकृतानि च ।
सोऽपि यां गतिमाप्नोति सोऽपि यज्ञशतैरपि ॥ 79.
तस्मान्मान्यश्च पूज्यश्च रक्षणीयश्च सर्वदा ।
नाममात्रप्रसन्नोऽपि क्षणार्धमपि यः शिवे ॥ 80.
स मुनिः स महासाधुः स योगी स शिवं व्रजेत् ।
गृहे श्राद्धस्य यत्पुण्यं अरण्ये तच्छताधिकम् ॥ 81.

(P.50) 12. तच्चादीत्ययुतं पुण्यं अनन्तं स्याच्छिवालये ।
निवेदयीत यः सम्यक् आसनं रुद्रवेत्रजम् ॥ 82.
नागदन्तमयं वापि सिंहासनपतिर्भवेत् ।
(P.51) कौपीनान्तादीनि कार्पासं निवेद्य शिवयोगिने ॥ 83.
युगकोटिसहस्राणि शिवलोके महीयते ।
और्णं प्रावरणं दत्वा विस्तीर्णं शिवयोगिने ॥ 84.
रोम्णि रोम्णि सुवर्णस्य दत्तस्य फलमाप्नुयात् ।
व्याघ्रजं मृगचर्मादि तिलपिष्टविमर्दितम् ॥ 85.
मृदुरक्तं कषायेण निवेद्य शिवयोगिने ।
यावत्तद्रोमसंख्यातं मृग०व्याघ्रादिचर्मणि ॥ 86.
तावद्युगसहस्राणि रुद्रलोके महीयते ।
जलस्थलपवित्राणि निवेद्य शिवयोगिने ॥ 87.
त्राणार्थं सूक्ष्मतन्तूनां अब्दलक्षं वसेद्दिवि ।
त्रिविष्कंभसमायुक्तं यः प्रदद्यात्कमण्डलुम् ॥ 88.
महासरांसि यद्दत्वा तत्पुण्यं सकलं लभेत् ।
मृदुवासश्च सुश्लक्ष्णं व्रणदोषविवर्जितम् ॥ 89.
निवेद्य शिवयोगिभ्यः सर्वयज्ञफलं लभेत् ।
वृंशदारु गर्भश्रीदं सुकृतं भैक्षभाजनम् । 90
निवेद्य शिवयोगिभ्यः सदा सत्रफलं लभेत् ।
दन्तधावनमुष्णीषं निवेद्य शिवयोगिने ॥ 91.

(p.51) 12. दिव्यस्त्रीभोगसंयुक्तं हैमं स्वर्गे पुरं लभेत् ।
योगपट्टोपवीतानि निवेद्य शिवयोगिने ॥ 92.
वस्त्रयुग्मसहस्रस्य दत्तस्य फलमाप्नुयात् ।
शिवभक्ताय यो दद्याद् उपानत्काष्ठपादुके ॥ 93.
स वराश्वसहस्रस्य दत्तस्य फलमाप्नुयात् ।
कल्याणदण्डं यो दद्याद् अन्यं वा शिवयोगिने ॥ 94.
बलावष्टम्भयुक्तात्मा भवेद्दण्डाधिनायकः ।
ताम्रं वंशातपत्रं वा निवेद्य शिवयोगिने ॥ 95.
एकच्छत्रं स भुंजीत मण्डलं शतयोजनम् ।
पात्रान्तरविशेषेषु दत्तेषु शिवयोगिने ॥ 96.
भवेत्क्षितिपतिः श्रीमान् कुलाधारो गुणान्वितः ।
शिवज्ञानाभियुक्ताय यो दद्यात्पुस्तकं महत् ॥ 97.
युगकोटिशतं दिव्यं शिवलोके महीयते ।
भवेदिहागतः श्रीमान् सुखाढ्यो वेदपारगः ॥ 98.
सम्यग्ज्ञानार्थवक्ता च बृहस्पतिसमो भवेत् ।
यः कुर्यात्कारयेद्वापि वपनं शिवयोगिनाम् ॥ 99.
वर्षलक्षं महायानैः शिवलोके महीयते ।
यः कारयेच्च भक्तानां वपनं शिवयोगिनाम् ॥ 100.
इह लोके सुखं प्राप्य सोऽन्ते मुक्तिमवाप्नुयात्
एवं वस्तुविशेषेषु दत्तेषु शिवयोगिने ॥ 101.

(p. 51) 12. सर्वेद
~~फलं~~ भक्तिविशेषेण फलं पात्रविशेषतः ।
शिवयोगी शिवज्ञानी शिवधर्मरतश्च यः ॥ 102.
शिवं प्राप्नोति तुल्यत्वात् सर्वतुल्यगुणाः स्मृताः ।
रुद्रो रुद्राक्षदानेन भवतीति किमद्भुतम् ॥ 103.
तस्मात्त्वया सदा हस्ते रुद्राक्षं क्रमते क्षितौ ।
रुद्राक्षाणि स्वयं रुद्रो ये च रुद्राक्षधारकाः ॥ 104.
रुद्राक्षधारणात्तस्माद् इह रुद्रः परत्र च ।
रुद्राक्षमालां यो धत्ते भक्त्या कण्ठे करेऽपि वा ॥ 105.
शताधिक्य प्रमाणेन स रुद्रो नात्र संशयः ।
जपाश्च रुद्रमंत्राणां कोटिकोटिगुणोत्तरम् ॥ 106.
हस्ते मूर्ध्न्युपवीते वा कृत्वा रुद्राक्षमालिकाम् ।
यश्च भुंजीत तद्भुक्तं रुद्रो भुंक्ते स्वयं प्रभुः ॥ 107
रुद्राक्षधारणं तस्मात् नित्यमेव प्रशस्यते ।
परात्मानुग्रहार्थाय ब्राह्मणस्य विशेषतः ॥ 108.
यति मात्रोपकरणं दत्वाल्पमपि भक्तितः ।
वर्षकल्पं महाभोगैः शिवलोके महीयते ॥ 109.
कुर्यादावसथं सौम्यं सुगुप्तं शिवयोगिनाम् ।
शिवालय कृते यावत् तावत्पुण्यं समं भवेत् ॥ 110.
यथा शिवस्तथा योगी यथा योगी तथा शिवः ।
तेन योगीन्द्रपात्रेषु दानमण्वपि चाक्षयम् ॥ 111.

(PL 51) 12 यद्यदस्योपयुज्येत तद्देयं तस्य भक्तितः ।
उपयोगप्रदानेन प्रशस्तं लोकमाप्नुयात् ॥ ११२.
व्याख्याने शिवधर्मस्य कृत्वा मण्डपमुत्तमम् ।
शोभितं मृदुगन्धाद्यैः न्यसेत्तत्रासनं शुभम् ॥ ११३.
(PL 52) (तद्गुरोः) पुस्तकं तद्गुरोः स्थाप्य पूजयेदुभयं ततः ।
शिवधर्मप्रवक्तारं आचार्यं पूजयेत्ततः ॥ ११४.
शिवश्च शिवधर्मश्च तुल्यमेव न संशयः ।
पूजयेच्छिवधर्मं च तुल्यमेतद्द्वयं यतः ॥ ११५.
य एवं ध्यायतो भक्त्या शिवधर्मं शृणोति च ।
आयुर्विद्यां यशःसौख्यं लब्ध्वान्ते तु शिवं व्रजेत् ॥ ११६.
इत्येष वः समाख्यातः शिवधर्मः सनातनः ।
सर्वेषां शिवभक्तानां अयं धार्यो विजानता ॥ ११७
शिवाश्रमेषु यो भक्त्या शिवधर्मं प्रवर्तयेत् ।
शृणुयाच्च भवेत्तस्य शास्त्रोक्तमखिलं फलम् ॥ ११८.
श्रुत्वैवमखिलं धर्मं आख्यातं ब्रह्मसूनुना ।
चन्द्रात्रेयसगोत्राय शिवभक्ताय सारवत् ॥ ११९.
सारात्सारं समुद्धृत्य चन्द्रात्रेयेण धीमता ।
उक्तं द्वादशकाध्यायं धर्मशास्त्रं शिवात्मकम् ॥ १२०.
यावदस्योपदेशेन शिवधर्मं समाचरेत् ।
तावत्तस्यापि तत्पुण्यं उपदेष्टुर्न संशयः ॥ १२१.

(p. 552) 12. उपदेशं विना यस्माद् धर्मो ज्ञातुं न शक्यते ।
न च कर्तुमविज्ञानात् तस्मात्तुल्यं तयोः फलम् ॥ १२२.
उपदेष्टानुमन्ता च कर्ता कारयिता च यः ।
कृतानुपालकश्चैव पंच तुल्य फलाः स्मृताः ॥ १२३.
कर्तुरभ्यधिकं पुण्यं तत्कृतं यस्तु पालयेत् ।
यस्मादायतनं क्षिप्रं नाशं गच्छेदपालितम् ॥ १२४.
भूमिरत्नाश्च नागानां गोहिरण्यादिवाससाम् ।
अवेत्पूर्वोपसृष्टानां दानाच्छ्रेयोऽनुपालनम् ॥ १२५
दातुरभ्यधिकं पुण्यं तद्दत्तं योऽनुपालयेत् ।
तत्पालितं नु तद्यत्नात् शीघ्रमेव प्रणश्यते ॥ १२६.
तस्मादुपदिशेद्धर्मं स्वयं वापि समाचरेत् ।
कारयेदनुमन्येत कृतमन्यैश्च पालयेत् ॥ १२७.
इति पंचप्रकारोऽयं शिवधर्मः प्रकीर्तितः ।
धर्मार्थी काममोक्षार्थी सर्वभूतानुकम्पया ॥ १२८.
कपालमालिन्देवेश! महाकाल नमोऽस्तु ते ।
चन्द्रार्धमूर्धन् भूतेश चर्मवासः सदाप्रिय! ॥ १२९.
गजचर्मरत! स्वामिन्! चण्डायुध (नाथ)! नमोऽस्तु ते ।
त्रिशूलपाणे! देवेश! त्रिणेत्र त्रिदशेश्वर! ॥ १३०.
त्रिमूर्ते च महायोगिन्! त्रिपुरान्तक! ते नमः ।
सर्वेश! हे! सर्वगत! सर्ववित्सर्वतोमुख! ॥ १३१.

(P. 152)

12. सर्वत्रावस्थितोऽनन्त! सर्वव्यापिन्नमोऽस्तु ते ।

स्थूलसूक्ष्मविभा·· व्याप्तं येन चराचरम् ॥ 132.

अनन्तानादिकाव्यक्त- व्यक्ताव्यक्ताय ते नमः ।

अनन्तं शाश्वतं विश्वं ध्रुवं नित्यमुमापतिम् ॥ 133.

श्रीकण्ठं सर्वकण्ठं च नीलकण्ठं नमाम्यहम् ।

विद्यामयी तनुर्यस्य विद्यार्थी ~~न~~ चततं स्थितम् ॥ 134.

सकलं निष्कलं चैव कलाहीन! नमोऽस्तु ते ।

योगाधिपो योगगम्यो योगात्मा योगसंभवः ॥ 135.

महायोगधरो यश्च योगेश्वर! नमोऽस्तु ते ।

सर्वतेजोमयं देहं तेजसामपि तेजसम् ॥ 136.

तेजोनिधिश्च यश्चैवं तेजोतीत नमोऽस्तु ते ।

ओमित्येकाक्षरं यत्तु प्रख्यातं भुवनत्रये ॥ 137.

तस्याप्यर्थपयो रस्तु सदाशिव नमोऽस्तु ते ।

अर्धमात्रापरार्धं यत् तस्याधस्य तु योऽधिप: ॥ 138.

परापरं परं शान्तं, शान्त्यतीत नमोऽस्तु ते ।

अकारोकारयोरूर्ध्वं मकारो बिन्दुरेव च ॥ 139.

निर्वाणपरमातीत! तदतीत नमोऽस्तु ते ।

वा··काग्रशतभागस्य शतधा कल्पितं च यत् ॥ 140.

अनौपम्यमनामं च शिव शान्त नमोऽस्तु ते ।

अनन्तानादिमव्यक्तं देहस्थं देहवर्जितम् ॥ 141.

(P.52) 12 हृदिस्थं सर्वभूतेषु व्योमस्थं यक्ष्मणोऽस्तु ते ।

अग्राह्यमिन्द्रियैर्यत् सर्ववस्तुविवर्जितम् ॥142.

स्वदेशे गूढमानन्त · गुहावास नमोऽस्तु ते ।

गुहातीतश्च गूढात्मा · गुह्यानां गुह्यगोचर! ॥143.

गुभावासश्च यो नित्यं गूढार्थं च नमोऽस्तु ते ।

महादेव महाबोध! महामाय! महाबल! ॥144.

महाज्ञान! परातीत! ज्ञानगुह्य नमोऽस्तु ते ।

(P.53) ईशानमीश्वरं ब्रह्म सदाशिवमजं परम् ॥145.

निर्द्वन्द्वं निर्मलं साक्षात् यं महेश नमोऽस्तु ते ।

एकाक्षरं चतुर्भेदं चतुर्मण्डैरकं कृतम् ॥146.

चतुष्कलं कलातीतं बिन्दुतीत! नमोऽस्तु ते ।

इति स्तवेन दिव्येन यः स्तौति परमेश्वरम् ॥147.

स मुक्तः सर्वपापेभ्यः शिवसायुज्यमाप्नुयात् ।

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥148.

सर्वः सुगतिमाप्नोतु सर्वस्य तु भवेच्छिवम् ।

इति शिवधर्मशास्त्रे नन्दिकेश्वरप्रोक्ते

शिवधर्मशास्त्रे द्वादशोऽध्यायः

शिवधर्मं पूर्वं संपूर्णम् ॥

26/6/59.